# चत्वारि सूक्तानि

(अम्भ्रिणीसूक्तम्, मन्युसूक्तद्वयम्, सपत्नघ्नसूक्तं च)

## आचार्यगोविन्दकृतभाष्यविभूषितानि

संशोध्य सम्पादकः

डा. बन्नञ्जे गोविन्दाचार्यः

प्रकाशनी

तत्वसंशोधनसंसत्

विद्यामान्यप्रकाशनम्

श्रीहृषीकेशतीर्थसंस्थानम्, रजतपीठपुरम् (उडुपि)

२०१३



**CATVĀRI SŪKTĀNI :** four vedic hymns, (Ambhriṇī sūkta, Two manyu sūktās, and sapatnaghna sūkta) with Bhāṣya and sangraha Bhāṣya by Dr. Bannanje Govindācārya, padmashri awardee, vidyā-vācaspati, vidyā-ratnākara,

Critically edited by : **Dr. Bannanje Govindācārya,**

Published by : Tatva-Samṡodhana-Samsat
Ṡrī Vidyāmānya Prakāṡana
Ṡrī Hṛṣīkeṡa-Tīrtha-Samsthānam,
(Ṡrī Palimāru Maṭha) Udupi,
Karnataka, (India) Tel. : 0820-2523402



First Edition : 2013, (Copies : 500)

Pages : 8+80

Price : ₹ 60

ISBN: 978-93-81807-10-1

Cover design: **K.M. Sheshagiri**

Typeset : **Kaddi S. Badarinarayanachar**
Poornaprajna vidyapeetha
E: bnkaddi@gmail.com

Printed at : **Sri Anirudh creations**
#144, 6th main, Gururaja Layout
Behind vidyapeeta,Banhaluru-560028
T:9880077876
E:srikanth.nsil@gmail.com



कृष्णं वन्दे जगद्गुरुम्



## कृतज्ञतां प्रशास्महे

गणकयन्त्रद्वारा कृताक्षरविन्यासाय निस्पृहाय विदुषे श्रीमते कड्डीपदोपाह्वाय बदरीनारायणाचार्याय–

अक्षरशोधनकर्मणि सहकृतवते श्रीमते विजयसिंहाय भट्टकृष्ण-राजाय हयवदनाय च ।

रक्षापत्रे मधुरं कृतकलाविन्यासाय युवकलाविदे श्रीमते के. एम्. शेषगिरये–

भगवदर्पणमिति सेवाबुद्ध्या सुन्दरं मुद्रयित्वा कृतसहकाराय 'अनिरुद्धक्रियेषन्' इत्यस्याधिकृताय श्रीमते श्रीकान्ताय–

**रजतपीठपुरम्** **प्रकाशनसमितिः**
**तत्वसंशोधनसंसत्**

# प्रथमं निवेदनम्

अत्र चत्वारि सूक्तानि भवन्ति–वाग्देवतया प्रळयाम्भसि भगवता सह विहरमाणया, अत एवाम्भ्रिण्याख्यया श्रिया दृष्टं स्वदेवत्यमम्भ्रिणीसूक्तम्, प्राणावतारभूतेन देवर्षभेण च भीमसेनेन दृष्टे मन्युनामकनरसिंहदेवत्ये द्वे मन्युसूक्ते, सपत्नघ्ननरसिंहदेवत्यमेकं सपत्नघ्नसूक्तं च । तदेव ऋषिनाम्ना ऋषभसूक्तमिति चोच्यते, ऋषभेण दृष्टं सूक्तमिति । ऋषभपदघटितत्वाच्च–'ऋषभं मा समानानाम्' इति । तद्यथाऽऽदौ केनपदघटितमिति तलवकारोपनिषदं केनोपनिषदमाहुः । यथा वा, ईशावास्यमित्यारम्भात् याज्ञीयमन्त्रमीशावास्योपनिषदमाहुः । 'ईशा' इति प्रतृण्णवादिनश्चेशोपनिषदम् ।

अहो बुभूषूणां भागधेयमेतद् यत् स्वयं भगवज्जायया दृष्टमेकं सूक्तम्, अथ भगवतः साक्षात् पुत्रस्य भविष्यदब्जसम्भवस्य प्राणस्य द्वितीयावतारेण भीमसेनेन दृष्टानि च त्रीणि सूक्तानि वेदपुरुषः स्वयं वाजिग्रीव आविश्चकारेति ।

भीमसेनस्याऽर्षमिदं सूक्तत्रयं भीमसेननाम्नोऽपूर्वमर्थान्तरं स्फोरयतीव । इनेन नरसिंहेन सहितः सेनो भीमो भीमसेन इति । भीमा सेनाऽस्येति तु सङ्ग्रामसमयमात्रान्वयि । इनसाहित्यं तु सार्वकालिकमिति तदेव मुख्यं निरुक्तमिष्यते । अथ च भीमः शत्रुभयङ्करो नरसिंहः । 'मृगं न भीमम्' इति श्रवणात् । सकारो विष्णुवचनः । 'अकयप्रविसम्भूमसखहा विष्णुवाचकाः' इति स्मरणात् । ततश्च नरसिंहवपुर्विष्णुः भीमस उच्यते । सशब्दोऽयम्, न



तच्छब्दः । तेन सः सौ साः इत्येव रूपम् । 'सारत्वात् स इति प्रोक्तः' इति चाभिधानम् । हं चासौ सश्चेति हंस इतिवत् भीमश्चासौ सश्चेति विग्रहः । स एवेनोऽस्येति भीमसेनो मध्यमः प्राण उच्यते । मध्यमपाण्डवोऽपि ।

ऋषभ इति च सर्वज्ञ उच्यते । ऋषति सर्वं जानाति, सर्वत्र गच्छतीति वा ऋषभः । ऋषतेरभच् इति वैयाकरणाः । 'ऋष ज्ञाने' इति प्रतनो धातुपाठः । 'ऋषी गतौ' इति पाणिनीयाः । ऋषेण सर्वविषयेण भगवद्विषयेण वा ज्ञानेनान्यजीवेभ्योऽतिशयेन भातीत्यृषभ इति तु निर्वचनेऽपि स्तोभाक्षरमसहमानास्तत्ववादिनः । तेन ऋषभ इति प्राणः । ऋषभाः प्राणावताराः । तेन ऋषभस्य देवोत्तमस्य जीवोत्तमस्य भीमसेनस्येदमार्षमिति चेदमृषभसूक्तमिति सर्वं सुन्दरम् ।

एवं सपत्नघ्नसूक्तमिति चोभयार्थम् । देवशत्रून् वा तामसान् वा हन्तीति सपत्नघ्नो नरसिंहस्तदनु प्राणश्च । विशिष्य च सपत्नान् शतं दुर्योधनादीन् जघानेति सपत्नघ्नो भीमसेनः । तेन सपत्नघ्नस्याऽर्षं सपत्नघ्नदेवत्यं च सूक्तं सपत्नघ्नसूक्तमित्याचक्षत परावरविदो मन्त्रद्रष्टार ऋषयः ।

तानि चेमानि नित्यपूजासूपयुक्तानि सूक्तरत्नानि । उपनीतैर्वटुभिरवश्यमध्येतव्यानि । अध्ययनमिति न कण्ठपाठः । वेदवादोऽयम् ।अर्थाधिगमो ह्यध्ययनमुच्यते । तेनार्थपूर्णमध्ययनं भवति । सार्थकं चानुष्ठानम् । अनधिगत्य मन्त्रार्थं तस्य जपादिषु विनियोगोऽनर्थहेतुरिति चोक्तम्–'यदि हवा अप्यनेवंविन्महत् पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एव' इति बृहदारण्यके । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति च्छन्दोगोपनिषदि ।

तस्मादर्थमनुसन्धायैव मन्त्राः पठनीया इति स्थितम् । तदर्थोऽयं यत्नः । सन्ति पूर्वतनानि व्याख्यानानि । अथापि विशेषार्थान्वेषणलोलुपतया मया किमपि नूतनं भाष्यं व्यरचि । यत्र मान्यवयोः सूक्तयोः ऋषभसूक्तस्य च भीमसेनदृष्टोऽर्थो विशिष्य न्यरूप्यत । तदिदमपूर्वमुपायनं जिज्ञासूनाम् ।

प्रथममम्भ्रिणीसूक्तस्य मन्युसूक्तयोश्च सङ्क्षिप्तं व्याख्यानमकारि । ततः पुनर्विस्तृतेन भाष्येण च तानि समयोजिषत । अथ तदुभयमप्यत्र सहैव मुद्रितं सङ्क्षेपविस्तरप्रवचनपटूनां मनीषिणां मोदाय। 'सङ्क्षेपविस्तराभ्यां हि प्रवदन्ति मनीषिणः' ।

अन्ते च सूक्तानां केवलपाठः, यथा मन्त्रजातमधिजिगांसमानानां सूक्तानुपूर्वीपाठः सुकरः स्यात् । अम्भ्रिणीसूक्तं मन्युसूक्तद्वयं च बह्वृचा अपि पठन्ति । आथर्वणा अपि । जिज्ञासुसौकर्याय उभयविधोऽपि पाठोऽत्र निवेशितः । ततः प्राणनारायणयोनुग्रहप्राप्तो नृसिंहस्तवः । अन्ते च तत्ववादिजनमनोविनोदाय तारतम्यमीमांसा भवति ।

श्रीपलिमारुमठाधीशानां श्रीहृषीकेशतीर्थसंस्थानमधिरूढानां श्रीविद्याधीशतीर्थश्रीचरणानां करुणामयेन वात्सल्येनेयं कृतिः तदीयया तत्वसंशोधनसंसदा प्रकाश्यत इति मे महद् भागधेयम् । श्रीचरणेभ्योऽयं प्रणामाञ्जलिः ।

श्रुत्यर्थमधिजिगांसूनाममत्सराणां सतामिदमपूर्वमुपहरणं भूयादित्याशासे ।

भवदीयः

**– डा. बन्नञ्जेपदोपाह्वः आचार्यगोविन्दः**





**प्रणतवान् प्राणिनां प्राणभूतं**
**प्रणतिभिः प्रीणये पूर्णबोधम् ॥**




## आचार्यगोविन्दप्रणीतं भाष्यम्

## सङ्ग्रहभाष्यं च



ॐ

ॐ ॥ रममाणः प्रळयाम्भस्यम्भ्रो देवस्तथाऽम्भ्रिणी देवी ।
मातापितरौ जगतः पातामेतं च निजपोतम् ॥

जगतः पितरौ नत्वा प्राणं नत्वा जगद्गुरुम् ।
विमृश्य वाचमर्थं च वाक्सूक्तस्यार्थ उच्यते ॥

वाग्देव्या अम्भ्रिण्याः सूक्तमिदं द्विः पठ्यते– ऋग्वेदे दशममण्डले (सू.१२५), तथाऽथर्ववेदे चतुर्थकाण्डे (सू.३०) ।

अष्टर्चमिदं सूक्तमष्टधा भिन्नायाः प्रकृतेर्मानिन्याऽम्भ्रिण्या दृष्टम् । तत्राऽद्याः पञ्चर्च एको वर्गः । ततस्तिस्रो द्वितीय इति बह्वृचाः । देवता च सैवाम्भ्रिणी लक्ष्मीः ।

अथर्ववेदे चेदं सूक्तं राष्ट्रीदेवीसूक्तमित्याचक्षते । अथर्वण आर्षम् । देवता वाक् । वागिति श्रुतिमानिनी श्रीरेव । सैव च राष्ट्रीदेवी । बह्वृचानां तु कश्चन सम्प्रदायविप्लवो दृश्यते । केचिदम्भ्रणीमृषिकां देवतां चाऽचक्षते । अपरे त्वम्भृणीम् । अन्ये पुनराम्भृणीम् । सायणोऽप्याम्भृणीवादः । तथाहि तद्वचनम्– ‘अम्भृणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मविदुषी स्वात्मानमस्तौत्’ इति । अथर्ववेदटीकायामपि प्रललाप–‘सर्वजगत्कल्पनास्पदं सच्चित्सुखास्पदं परं ब्रह्म स्वात्मत्वेन विदुषी, अम्भृणाख्यस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मवादिनी स्वात्मानं

सर्वात्मभावेन तुष्टाव' इति । अहो मोहमहिमा । यत् सर्वोऽपि स्वाभिमतमेव वेदगदितमिति मन्यते । एतादृशानेव वेदवादरतानाह भगवान्, 'वेदवादरताः पार्थ नान्यदस्तीति वादिनः' इति । अयमपि हि स्वात्मानमेव सर्वात्मभावेन दिदृक्षमाणो नान्यदस्तीति मन्यते । वेदार्थं स्वाभिमतममन्यन्त प्राञ्चः । अयं तु स्वाभिमतमेव वेदार्थं मन्यते । नहि सर्वात्मभावस्य गन्धोऽपि सूक्ते दृश्यते । यो हि यत्राऽऽदरवान् तस्य तत्राविद्यमानमपि तदेव भासते स्वप्नेऽपि । सत्यमुक्तं भगवत्या श्रुत्या–'उत त्वः पश्यन् न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्' इति । वयं वेदपदगदितमेवार्थमन्वेषमन्वेषं मन्त्रवर्णार्थ-निर्वर्णनाय यथाप्रज्ञं प्रयतामहे ।

अस्तु तावद् वेदार्थवार्ता । ऋषिदेवते अप्यसङ्गते आह सायणः–'अम्भृणाख्यस्य महर्षेर्दुहिता' इति । कोऽयमदृष्टाश्रुतपूर्वोऽम्भृणो नाम । नूनं सायणादि-प्रज्ञावादसमुद्भवोऽयं महर्षिः । नूनमेते 'आम्भृणी' इति नामभ्रान्त्या अम्भृणं नाम कञ्चन महर्षिमेव ससृजुः । वैदिकेष्वपि भवन्ति भ्रममूलाः कल्पना-विलासाः । भ्रमस्य च सर्वमूलं कात्यायनवचनं दाशतय्यनुक्रमणिकायाम्–'अहमष्टौ, वागाम्भृणी, तुष्टावाऽऽत्मानम्, द्वितीया जगती' इति । प्रचलितपाठस्यायमर्थः–अहमिति सूक्तप्रतीकम् । अहमित्यधिक्रियमाणे सूक्ते अष्टावृचः । वाङ्नाम्नी आम्भृणी ऋषिका । सा स्वात्मानमेव तुष्टावेति सैव देवता । तत्र द्वितीया ऋक् जगतीबद्धा । अन्याः सप्त त्रिष्टुभ इति ।

वेदव्याख्यातॄणां मनसीयमपपाठप्रभवा आम्भृणी दृढं तस्थौ । आम्भृण्या निर्वचनान्तरमपश्यन्तः स्वयमम्भृणं कल्पयामासुः । तेनाहो आम्भृणी-पदतनयोऽयमम्भृणः, नत्वम्भृणदुहिता आम्भृणीत्यायातम् ।

एतेन 'वाङ्नामाऽऽम्भृणी । अम्भृणस्य महर्षेः पुत्री' इति वदन्तः षड्गुरुशिष्यप्रमुखाः सर्वे सर्वानुक्रमणीव्याख्यातारो व्याख्याताः ।



एतस्यासाधुतां मन्वानाः पुनरन्ये अम्भृणीमृषिकामाहुः । अम्भ्रणीमपरे । सर्वेऽप्येतेऽपशब्दाः । अपरिचितः शब्दः, अपरिचितोऽर्थः । इदमुपज्ञं श्रुतिपथं जगाम । सहजं तेन बभ्रमुः । विरूपयामासुः पदरूपम् । कल्पयामासुश्च स्वकपोलकल्पितानर्थान् ।

तथाच 'वागम्भ्रिणी' इत्येव कात्यायनपाठः साधीयान् । लिपिकारा विभ्रम्य किमपि लिलिखुः ।

ननु तत्रापि किं गमकम्? येनेयता विश्रम्भेण 'अम्भ्रिणी, अम्भ्रिणी' इत्याम्रेड-यसि ? अस्ति बीजम् । शुद्धपाठोपलम्भ एव विश्रम्भबीजम् । तथाह्याह भगवाना-चार्यमध्वस्तन्त्रसारसङ्ग्रहे– 'स्वदृष्टं सूक्तमखिलं कामदं हरितुष्टिदम् । वाचोऽ-म्भ्रिण्याः श्रियः–' (४.८४) इति । बृहद्भाष्येऽप्युक्तम्–'श्रीर्भूर्दुर्गाऽम्भ्रिणी ह्रीश्च महालक्ष्मीश्च दक्षिणा । सीता जयन्ती सत्या च रुग्मिणीत्यादिभेदिता' इति ।

इदमिदानीमवगतम्–वाङ्मानिनी श्रीरेवाम्भ्रिणीपदगदिता । तस्या एवाऽऽर्षमिदं सूक्तम् । सैव च सूक्तस्य देवतेति । कथमम्भ्रिणी? का निरुक्तिः? अत्र केचिदाक्षते–अकारवाच्यं ब्रह्म बिभर्तीति अम्भ्रिणीति । अस्माकं त्वन्यैव निर्वचनसरणिः परिस्फुरति– अम्भसि प्रळयोदन्वति रमत इत्यम्भ्रो भगवान् । तस्येयं भवत्यम्भ्रिणी दयिता । अम्भ्रिणः स्वभक्तान् नयतीति अम्भ्रिणो भगवान् । अम्भ्रिणां णः स्वरूपानन्दो येनेति वा । अम्भ्रिणस्येयं स्त्री भवत्यम्भ्रिणी दयिता । अम्भ्रिण्याः कृत्यानुगुणमिदं निर्वचनं भवति ।

तथाहि यदा प्रळयाम्भसि रममाणः शेते भगवान् श्रीर्भूर्दुर्गेति त्रिरूपाऽपि रमा तदा भगवता सह शयाना रमते । तदा च तस्यास्तुरीयं रूपं श्रुतिमानि श्रुतिवचोभिर्भगवन्तं स्तौति । तां वाग्देवीगदितां स्तुतिमेव श्रुतिगीतेति सञ्जग्राह भागवते भगवान् बादरायणः । तदिदमुक्तं तन्त्रभागवते–'श्रीर्भूर्दुर्गेति या भिन्ना प्रकृतिः शक्तिरुच्यते । विष्णुस्वरूपशक्तेः सा शक्यत्वाच्छक्तिरेव तु । नित्याव्यवहितत्वात्तु विशेषाच्छक्तिनामिका । यथैव पङ्कजं ब्रह्मा रुद्र इत्यादिकं

पदम्। ताभिः शयानं पुरुषं सैव तु श्रुतिरूपिणी। अस्तौत्–' इति। ज्योतिःसंहितायां च–'श्रीर्भूमिरिति रूपाभ्यां प्रकृतिर्विष्णुना सह। शेते श्रुतिस्वरूपेण स्तौति ब्रह्मलये हरिम्। एकाऽप्यनन्तरूपा सा वाक्यभेदात् सरस्वती। अनादिनिधना नित्या स्तौति नारायणं प्रभुम्' इति। एतेन अं भरन्तीति श्रुतयोऽम्भ्रा उच्यन्ते। तन्मानिनीति चेयमम्भ्रिणी भवति।

तथाचाम्भ्रिण्या दृष्टं सूक्तमित्यम्भ्रिणीसूक्तम्। अम्भ्रिणीदेवताकं सूक्तमित्यम्भ्रिणीसूक्तम्। प्रळयकाले केवलं भगवन्तं तुष्टाव। अथ सृष्टे जगति स्वतनयानां ब्रह्मादीनां स्वात्मानं संस्तावयन्ती सूक्तमिदं ददर्शेति सर्वं सुन्दरम्।

बृहदेवतायां शौनकस्तु–'अहं वाक्सूक्तमर्यम्णो मित्रस्य वरुणस्य च' इत्याह। अत्रार्यममित्रवरुणाः सङ्कर्षणप्रद्युम्नानिरुद्धाः स्युः। अन्यथाऽसङ्गतेः। अस्य सूक्तस्य विनियोगश्चर्ग्विधाने–

'वाचं प्रपद्येद् वाक्कामो जुह्वदाशु जपन्निमाः।
'अहं रुद्रेभिरित्येतद् वाग्मी भवति पूजितः' इति।

अवगते ऋषिदेवते। छन्दोविषये तु द्वितीया जगतीत्याह कात्यायनः। अन्यास्त्रिष्टुभ इति स्फुटम्। विशेषं तु तत्रतत्रैव वक्ष्यामः। तत्रेयं प्रथमा ऋग् भवति–

**हरिः ओ३म्॥अहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदेवैः।**
**अहम्मित्रावरुणोभाबिभर्म्यहमिन्द्राग्नीऽअहमश्विनोभा॥**
**॥ १ ॥**

**अहम्। रुद्रेभिः। वसु+भिः। चरामि। अहम्। आदित्यैः। उत। विश्व+देवैः॥ अहम्। मित्रावरुणा। उभा। बिभर्मि। अहम्। इन्द्राग्नी-इति। अहम्। अश्विना। उभा॥ १॥**

अहं रुद्रेभी रुद्रैरेकादशभिः सह चरामि तान्नियन्तुमेकादशरूपा।अन्ते च चरामि संहरामि। चर गतिभक्षणयोः। 'अतो भिस ऐस्' (अ.सू.७.१.९) इति भिस



ऐस् भवति च न भवति च। 'बहुलं छन्दसि' (१०) इति विकल्पाम्नानात्। अतो वेदेषु रूपद्वयम्– रुद्रैरिति रुद्रेभिरिति। आदित्यैरिति आदित्येभिरिति। के त एकादश रुद्राः? उक्ता भागवते–'रैवतोजो भवो भीमो वाम उग्रो वृषाकपिः। अजैकपादहिर्बुध्निर्वामदेवो महानिति' इति। 'रैवतः ओजः' इति प्रतृण्णम्। महानिति महादेवः प्रधानरुद्रः। ग्रन्थान्तरेष्वेतेषामन्यानि च नामानि भवन्ति। बहुनामानो हि देवाः। अत्र रुद्रपदेनैव मरुद्गणा अप्युपसङ्गृह्यन्ते। ते चैकोनपञ्चाशत्। मुख्यवायुना सह पञ्चाशद्वा। एवं वसुभिरष्टाभिश्चराम्यष्टरूपा। पूर्ववदर्थः। के तेऽष्टौ वसवः? उक्ता भागवते–'द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वस्तुर्विभावसुः' इति। अष्टस्वग्निः प्रधानः। एतेषामन्यानि च नामानि भवन्ति। अहमादित्यैर्द्वादशभिश्चरामि द्वादशरूपा। विश्वदेवैरुत विश्वदेवैरपि दशभिर्दशरूपा। के ते द्वादशादित्याः? उक्ता भागवते–'विवस्वानर्यमा पूषा त्वष्टा च सविता भगः। धाता विधाता वरुणो मित्रः शक्र उरुक्रमः' इति। एतेषामप्यन्यानि नामानि भवन्ति। एषु द्वादशसूरुक्रम इत्युदितो वामनात्मा नारायणः प्रधानः। उक्तं हि भारते–'अजघन्यो जघन्यजः' इति। अत्रेदमनुसन्धेयं भवति। उरुक्रमातिरिक्तैरेकादशभिरादित्यैः सह तान्नियन्तुं चरामि, अन्ते च तान् संहरामीत्याह। द्वादशेन पुनरादित्येन सदा तदङ्गतया नित्यावियोगिनीत्येवाऽह। अवश्यं चैतदेवं वक्तव्यम्। अन्यथा 'मम योनिरप्स्वन्तः' इति वक्ष्यमाणं विरुध्येत। के ते दश विश्वदेवाः? अन्यत्रोक्ताः–कामकालौ क्रतुदक्षौ सवसत्यौ धुरिलोचनौ पुरूरवार्द्रवौ चेति नान्दीदेवताः। सर्वेऽपि समाना अष्टादशकक्ष्यागताः। एतेन नारायणेन सह स्वस्य सर्वयज्ञभोक्तृत्वमाह देवी। तथाहि वसवः प्रातःसवनदेवताः। नारायणेन सह तेषु सन्निधायाहमेव प्रातःसवनाहुतीश्चराम्यश्नामीत्याह। विशिष्याग्नौ सन्निधाय। अत एवाग्निं प्रार्थयन्ते–'लक्ष्मीं जातवेदो म आवह' इति। रुद्रा मध्यन्दिनसवनदेवताः। तेषु सन्निधाय मध्यन्दिनसवनमप्यहमेव स्वीकरोमीत्याह– अहं रुद्रेभिश्चरामीति। आदित्या विश्वदेवाश्च सायंसवनदेवताः। तेषु सन्निधाय सायंसवनमप्यहमेव

स्वीकरोमीत्याह– अहमादित्यैरुत विश्वदेवैरिति। 'अहं हि सर्वयज्ञानां भोक्ता' इति भगवानाह । 'अहं सर्वयज्ञभोक्त्री' इति भगवती चात्र जुघोष । तेनोभयोरविनाभावः स्फुटमुदितो भवति । इदमप्युक्तम्–'लक्ष्मीमनपगामिनीं नारायणेन' इति ।

यत्तु कश्चिदाह–'रुद्रैः तदात्मना चरामि । एवं वसुभिरित्यादौ तत्तदात्मना चरामीति योज्यम्' इति । पूर्वोत्तरविरोधमप्यपश्यतः तादात्म्यभ्रान्तस्य स्वमतान्धस्य प्रज्ञावादोऽयम् । नह्यस्मिन् सूक्ते क्वाप्यभेदवार्ताऽपि श्रूयते । प्रत्युतोत्तरार्धे बिभर्मि धारयामीति भेद एव स्फुटं प्रतीयते। ननु नेदं भेदवचनम्, अहं सर्वं धारयामीति मयि सर्वं जगच्छुक्तौ रजतमिवाध्यस्तमित्यर्थवर्णनेन नात्र भेदवार्ताऽपि। अहो अद्भुतं ते भाषाज्ञानम्। नहि कोऽपि भाषाभिज्ञः 'शुक्ती रजतं धारयति' इति वदत्यनुन्मत्तः। तस्मादत्यन्तं हेयमिदं व्याख्यानं दूरतस्त्याज्यं वेदार्थबुभुत्सुभिर्दूरीकृतदुराग्रहैः ।

गणदेवता गदिताः । अथ द्विशः संयुक्तानाह– अहं मित्रावरुणा ।

आदित्यगणपठितावपि मित्रावरुणौ नियमनविशेषार्थं पुनराह– अहम् उभा उभौ मित्रावरुणौ बिभर्मीति । मित्रोऽहःसङ्कल्पयोर्देवता । पूर्वदिगभिमानी च । वरुणो रात्रिध्यानयोर्देवता । पश्चिमदिगभिमानी च । अहमेव तयोस्तत्तच्छक्तिदात्री तौ बिभर्मि धारयामीति ।

उभा मित्रावरुणा इत्यौट आ। 'सुपां सुलुक्–' (अ.सू.७.१.३९) इत्यादेः। ननु द्विवचनस्यैव द्वित्वसङ्ख्याविशिष्टत्वमर्थः। तत् पुनः किमित्युभाविति? अवधत्स्व। द्विवचनेन द्वित्वमुच्यते। उभाविति द्विविधत्वमुच्यते। स यथा 'द्वा सुपर्णा' इति । द्विप्रकारौ सुपर्णौ सर्वज्ञत्वेनाल्पज्ञत्वेन चेत्यर्थः । एवमत्रापि द्विप्रकारौ मित्रावरुणौ बिभर्मीत्याह। कौ द्वौ प्रकारौ? मुक्तत्वं चामुक्तत्वं च । एतेन नारायणवत् स्वस्या अपि मुक्तामुक्तनियामकत्वमाह । सर्वत्रा-



पीदमन्वेति– अहं रुद्रेभिरुभयैरिति, वसुभिरुभयैरिति, अहमादित्यैरेकादशभिरुभयैरिति, विश्वदेवैरुभयैरिति, अहमिन्द्राग्नी उभौ चेति ।

आदित्यगणगतः इन्द्रः पूर्वमुक्तः । वसुभिरित्यग्निश्च । क्रियामानित्वेन, हस्तमानित्वेन, मनोमानित्वेन, विज्ञानमानित्वेन चेन्द्रः पुनः प्रस्तूयते । पूर्वदिङ्मानित्वेन च। वाङ्मानित्वेन, चित्तमानित्वेन चाग्निः। अवान्तरदिङ्मानित्वेन च । उभौ मुक्तामुक्ताविन्द्राग्नी अप्यहमेव बिभर्मि तयोस्तत्तदभिमानं ददती, तयोः स्थित्वा तत्तत् कारयित्री चाहमिति ।

अथोभावश्विनावपि नासामानिनौ नाकवैद्यावहमेव बिभर्मि। अथचानेनैव कारणेन एकवचनवद् द्विवचनबहुवचने अपि मामेवाभिदधाते इत्युक्तं भवति। दुर्गाचार्य आह–'अहमेव मित्रावरुणौ उभावपि, इन्द्राग्नी अश्विनौ च उभावपि बिभर्मि हविषा । मत्पूर्वकं हविःप्रदानं सर्वदेवताभ्य इत्यभिप्रायः' इति । अविरुद्धमेतदित्यनुमतं तत्ववादिनामपि ।

अत्र चाहमिति पदावृत्त्याऽपूर्वां भाषासुषमां दर्शयति वाग्देवता। अवधारणार्था तात्पर्यार्था चेयमावृत्तिः। अपिच अहमित्यहेयं नारायणं स्मरन्ती स्वमहिमानमाविष्कर्तुमुपक्रमते। अहं मदन्तर्यामी नारायणः मां द्वारीकृत्यैव सर्वं निर्वाहयतीति च । न जहाति जातु भगवन्तमिति नित्यावियोगिनी वागम्भृणी चाहम् ।

अत्र पूर्वार्द्धे 'चरामि+अहम्' इति, उत्तरार्द्धे च 'बिभर्मि+अहम्' इति पादयोर्विश्लेषेण केवला त्रिष्टुप् ॥ १ ॥

### (सङ्ग्रहभाष्यम्)

**ॐ॥ रमयन्ती स्वरमणं कलया विलयाम्भसि।**
**वागम्भृणी सन्निधत्तां मयि वाक्पतिना सह॥**

दशममण्डले १२५तमं सूक्तम्। अष्टर्चमिदं सूक्तं वाग्देव्याऽम्भृण्याख्यया श्रिया दृष्टम्। सैव च देवता। द्वितीया जगती। अन्यास्त्रिष्टुभः।

वसुरुद्रादित्या विश्वे च देवाः सवनत्रयसङ्गताः । मित्रोऽहर्देवता । वरुणो रात्रि-देवता । इन्द्राग्नी मनोवचसोः वचःकर्मणोर्वा । अश्विनौ गन्धं ग्राहयतः । स्वयं च गन्धद्वारा ॥ १ ॥

**अ॒हंसोम॑माह॒नसं॑म्बिभर्म्य॒हन्त्वष्टा॑रमु॒तपू॒षण॒म्भग॑म् ।**
**अ॒हन्द॑धामि॒द्रवि॑णंह॒विष्म॑तेसुप्रा॒व्ये॒३॒॑यज॑मानायसुन्व॒ते ॥ २ ॥**

**अ॒हम् । सोम॑म् । आ॒ह॒नस॑म् । बि॒भ॒र्मि॒ । अ॒हम् । त्वष्टा॑रम् । उ॒त । पू॒षण॑म् । भग॑म् ॥ अ॒हम् । द॒धा॒मि॒ । द्रवि॑णम् । ह॒विष्म॑ते । सु॒प्र॒+अ॒व्यै॑ । यज॑मानाय । सु॒न्व॒ते ॥ २ ॥**

बह्वृचानां द्वितीयेयमृगाथर्वणानां षष्ठी । ‘द्रवि॑णा ह॒विष्म॑ते सुप्रा॒व्या॒३॒॑’ इति च तेषां पाठः । सायणस्तु तत्रापि ‘द्रविणम्-सुप्राव्ये’ इत्येव पठति ।

संयुक्ता गणदेवता उक्ताः । उक्तौ द्वौद्वौ च संयुक्तौ । अथ व्यष्टिदेवानाह– अहं सोममाहनसमिति । अनेन मन्त्रेण मध्यमाक्षरस्य सूर्यचन्द्रादिधारकत्वमुच्यते इति, ‘अक्षरमम्बरान्तधृतेः’ (ब्र.सू.१.३.१०) इति सूत्रभाष्ये स्थितम् । ‘अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगमिति मध्यमाक्षरस्य सूर्यादि-विधारकत्वश्रुतेः’ इति च तत्वप्रदीपे । व्याचख्यौ च मन्त्रवर्णम्–‘आहनसम्, आ समन्तात् हन्तारम्, संहर्तारमित्यर्थः’ इति । अनेन बहवोऽर्थविशेषाः सूचिता भवन्ति । तथाहि– सोम इति सोमलतामानी चन्द्र उच्यते । सोमे सप्ततन्तौ हूयमाने आहन्ति यष्टुर्दुरितजातमित्याहनाः । ‘आहनसमाहन्तव्यमभिषोतव्यं सोमम्’ इत्यसङ्गतं व्याख्यानम् । प्रायपाठविरोधात् । देवता ह्यत्र प्रस्तुताः । नन्वभिमन्यमानधर्मारोपेणाभिमान्येव स्तूयते । तत् कथमसङ्गतिः? सम्भवति साक्षादभिमानिधर्मे कुतोऽयं शिरःपरिवेष्टनेन नासास्पर्शः । अपिच, आरोप्येरन्नभिमन्यमानधर्मा अपि, यदि शुभाः । नच हन्तव्यत्वं नाम शुभधर्म इत्यलम् ।



एवमाहन्ति नैशं तमश्चन्द्रिकयेति चाऽहनाः । अथच सङ्कल्पमानी मित्र उक्तः । ध्यानमानी वरुण उक्तः । प्रतिभानमानीन्द्र उक्तः । चित्तमानी अग्नि-रुक्तः । इदमिदानीं विज्ञानमानिनं सोममाह– अहं सोममाहनसं बिभर्मीति । तेन विज्ञानदानेन मनसि निरूढं तम आहन्तीत्याहनाः सोमः । किञ्च सर्वेऽपि व्याधय आधिमूला भवन्ति । ताश्चायं मनसो दार्ढ्यदानेनाऽहन्तीत्याहनाः । तदुक्तम्– ‘मानवो बदरः सिन्धुः शशिनस्तु त्रिनामकम् । यो वेद मुच्यते रोगैः’ इति । अहमेव सोमे स्थित्वा सर्वमेतत् करोमि ।

अथ तमसस्त्वष्टारं तनूकर्तारं, प्रकाशस्य पूषणं वर्धयितारं भगमुत सूर्यं चाहमेव बिभर्मि । सूचितोऽयमर्थस्तत्वप्रदीपे–‘त्वष्टारमुत पूषणं भगमिति सूर्यादि-विधारकत्वश्रुतेः’ इति ।

अथ ‘रुद्रेभिः’ इत्येकादश रुद्राः पूर्वमुक्ताः । तत्र प्रधानं महादेवं पुनर्विशिष्योल्लिखति– अहं सोममाहनसमिति । सोम इत्युमापतिरीश्वरः । लौकिका अपि हि तं सोमेश्वरमाचक्षते । यश्च रजतगिराविव रजतपीठेऽप्यनन्तासनस्य पृष्ठभागे पूज्यते । योऽयं मनोमानी अहङ्कारमानी च सन् मनसि निरूढं पञ्चवृत् तम आहन्तीत्याहनाः । तदुक्तम्–‘प्रपञ्चय च पञ्चवृन्मम मनस्तमस्ताडय’ इति । अथ च प्रळये सर्वसंहर्ता चायमित्याहनाः । एतदेव सूचयाम्बभूव पण्डिताचार्यः–‘आ समन्तात् हन्तारम्, संहर्तारमित्यर्थः’ इति । तस्मिन् सन्निधायाहमेव सर्वमिदं निर्वहामीति मामेवाहनसं मन्यध्वमित्याह देवी । वक्ष्यति हि – अहमेवाऽहनसे रुद्रायापि धनुरातनोमीति ।

अथच पूर्वमन्त्रे रुद्रपदेनैव पञ्चाशन्मरुतोऽपि प्रस्तुता इत्युक्तम् । तत्र मरुतां मुख्यं प्राणं पुनराह– अहं सोममाहनसमिति । उत्कृष्टा मा भगवत्प्रज्ञा उमा । उत्कृष्टा माः सप्त शिवा वा मातरः । तन्मानिनी भारतीति यावत् । ताश्च बिभ्रदयं सोम इति पवमानः । पवमानमण्डलप्रतिपाद्यो हि पवमानः सोम उच्यते । स तामसानाहन्ति, तम आहन्ति, भक्तानां दुरितानि चाऽहन्तीत्या-

हनाः । चित्तदेवता सन् भगवद्विषयमज्ञानं विस्मृतिं चाऽहन्तीति चाऽहनाः । तन्माताऽहमेव तस्मिन्नासीना सर्वमिदं करोमीत्याह ।

पूर्वं त्रय आदित्या विशेषविवक्षया पृथङ्निर्दिष्टाः– इन्द्रो वरुणो मित्र इति । अत्र पुनस्त्रीनाह– त्वष्टारमुत पूषणं भगमिति । पूर्वं मासदेवतात्वेन सायंसवनदेवतात्वेन त्वष्टा प्रस्तुतः । अथ देवशिल्पित्वेन वृत्रपितृत्वेन च तं पुनर्निर्दिशति । 'विश्वकर्मा द्युवर्धकिः । त्वष्टा नाम स देवानां मयो नाम सुरद्विषाम्' इति यादवप्रकाशः । अहं त्वष्टारं देववर्धकिं कृत्वा बिभर्मि । स्वरतोऽपराधादिन्द्रस्य शत्रुं वृत्रं तस्मिन् जनयित्वा बिभर्मि । अहमेव पूष्णि सन्निहिता पुष्टिकरी स्तुता–'आर्द्रां पुष्करिणीं पुष्टिम्' इति । पुष्टिकारिण्या मम सन्निधानादेव पूषा पूषा बभूव । एवं भाग्यदेवताया मम सन्निधानादेव भगो भगो बभूव ।

अथच–'चत्वारः पुरुषा इति बाध्वः शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति' इत्यैतरेयगदिताश्चत्वारः पुरुषा अत्र प्रस्तूयन्ते–'अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम्' इति । मुखतः अन्यदिव वदन्ती श्रुतिरन्ततः अन्यदन्यदभिप्रैति । तदिदं परोक्षप्रियत्वं नाम देवानाम् । तथाहि महापुरुष इति पवमानात्मा चतुर्मुख उच्यते जीवेषु महानयं पुरुष इति । तथाह्युक्तम्– 'संवत्सराभिमानी तु ब्रह्मैव हि महापुमान्' इति । स मोक्षमार्गदेशनेन संसारमाहन्तीत्याहनाः । 'स एनान् ब्रह्म गमयति' इति हि श्रुतिः । स तावदिह गदितः–अहं सोमं पवमानमाहनसं बिभर्मीति । एतेन वायुधारकत्वमुक्तम् । उक्तौ जीवमानिनौ चित्तमानिनौ च । अथ मनोमानिनो गरुडशेषरुद्रानाह– त्वष्टारमुत पूषणं भगम् । त्वष्टा वेदपुरुषो गरुत्मान् । तदुक्तम्–'सर्ववेदाभिमान्येव गरुडो वेदपूरुषः' इति । कथं त्वष्टा गरुडः? वेदार्थाधिगमनेन त्वक्षति तनूकरोत्यज्ञानमिति । त्वक्ष तनूकरणे । त्वष्ट्वात्वष्ट्वा मनसः सहजं रूपमाद-धातीति च । सोऽप्याहन्त्यज्ञानमित्याहनाः । सर्ववर्णाभिमानी छन्दःपुरुषः शेषः पूषा । तदुक्तम्–'सर्ववर्णाभिमानी च शेषोऽसौ छान्दसः पुमान्' इति । कथमथ शेषः पूषा? वर्णानामभिज्ञानेन वेदार्थग्रहणशक्तिं पूषति वर्धयतीति ।



पूष वृद्धौ । सोऽप्याहन्त्यज्ञानमित्याहनाः । भग इति शरीरपुरुषः शिवः । तदुक्तम्–'सर्वदेहाभिमानी तु शरीरपुरुषः शिवः' इति । कथं वा भगः शिवः? साधनयोग्यशरीरदानेन जीवं ज्ञानभक्तिवैराग्यभाजनं करोतीति । सोऽपि साधकस्याहङ्कारमाहन्तीत्याहना एव । एवमेताः पञ्च देवताः सभार्या अहमेव बिभर्मीत्याह ।

अथच, अहमपि कांश्चन चतुरः स्वस्मिन् शक्त्याधानाय हृदये बिभर्मीत्याह– अहमिति । साधुषु सौम्यः सोमो मुक्तिप्रदो वासुदेवः । आहन्ति संसारपीडां भयं वेत्याहनाः । 'सोमः स एवाऽत्मपदाश्रितेषु' इति हि स्मरन्ति । तमहं मायात्मना भक्त्या बिभर्मि परिसेवे इति । त्वष्टारं च सङ्कर्षणं जयात्मना । प्रसिद्धो हि सङ्कर्षणे त्वष्टृशब्दः–'त्वष्टा रूपाणि पिंशतु' इत्यादौ । सृष्ट्या विश्ववर्धनात् पूषा प्रद्युम्नः । तं कृत्यात्मना सेवे । भग इत्यनिरुद्धः । जातस्य जीवजातस्य सुखदुःखे भाजयतीति भगः । भवं गमयतीति वा । तं शान्त्यात्मना सेवे । व्यत्ययेनापि शक्यमनुसन्धातुम्–पूषाऽनिरुद्धो भगः प्रद्युम्न इति । एवं चतूरूपं नारायणं हृदि बिभ्रती तत्सेवयाऽऽत्तशक्तिरहमन्यान् सर्वानपि देवान् नियम-यामि । बाह्ययज्ञे त्वाज्यादिहविष्मते, अन्तर्यज्ञे भक्त्या दर्शनकातरतया भगवन्त-माह्वयते । सु= शोभनेन पूजनेन, 'सुष्ठुपूजासुखेषु सु' इति यादवप्रकाशः, प्र प्रथमं प्रतनं प्रकृष्टं च नारायणम्, 'अकयप्रविसम्भूमसखहा विष्णुवाचकाः' इति ह्यभिदधति, अवति प्रीणयति तर्पयतीति वा सुप्रावीः, तस्मै । अव प्रीतौ । अव तृप्तौ । सोमं सुन्वते, भक्तिरसं वा सुन्वते यजमानाय आराधकाय यज्ञार्थं द्रविणं बाह्यं वित्तमान्तरं ज्ञानभक्त्यादिकं च, अहमेव दधामि ददामि दत्वा च निरन्तरं पोषयामि । ज्ञानयज्ञफलं द्रविणं मोक्षाख्यं वा ।

आथर्वणानां पाठे सुप्राव्या सुप्राव्याणि देवान् तर्पयन्ति द्रविणा द्रविणानि दधामि ।

उभयेऽप्येतां जगतीमाचक्षते । 'बिभर्मि+अहम्' इति विश्लेषेऽपि प्रथम-पाद एकादशाक्षरता । तुरीयपादे 'सुप्राविये' इति विश्लेषेण स्फुटमुत्तरार्धं

जागतम् । तेन निचृज्जगतीति युक्तं वचः । कात्यायनादयस्तु केवलां जगतीमेव मन्यन्ते 'बिभर्मि' इति विश्लेषेण, 'सहस्रशीर्षम्' इतिवत् ॥ २ ॥

**(सं.भा.)** आहनसं आहन्तारं तमसः । सोमं पवमानं चन्द्रमसं च । त्वष्टा तमसः तनूकरणात् वेदपुरुषः मनोमयकोशगतो गरुडः । पूषा तत्पोषणात् प्राणमयगतः शेषः । अन्नमयगतः भगः शिवः । दधामि धारयामि ददामि च । सुहविः प्रापय्य देवानां तर्पयित्रे ॥ २ ॥

**अ॒हं॑राष्ट्री॑स॒ङ्गम॑नी॒वसू॑नाञ्चिकि॒तुषी॑प्रथ॒माय॒ज्ञिया॑नाम् ।**
**ताम्मा॑दे॒वाव्य॑दधुᳶपुरु॒त्राभूरि॑स्थात्रा॒म्भूर्य्या॑वे॒शय॑न्तीम् ॥ ३ ॥**

**अ॒हम् । राष्ट्री॑ । स॒म्+गम॑नी । वसू॑नाम् । चि॒कि॒तुषी॑ । प्र॒थ॒मा । य॒ज्ञिया॑नाम् ॥ ताम् । मा॒ । दे॒वाः । वि । अ॒द॒धुः॒ । पु॒रु॒+त्रा । भूरि॑+ स्थात्राम् । भूरि॑ । आ॒+वे॒शय॑न्तीम् ॥ ३ ॥**

बह्वृचानां तृतीयेयमृगाथर्वणानां तु द्वितीया । 'भूर्या॑वे॒शय॑न्तः' इति च तत्र पाठान्तरम् ।

'राष्ट्री अर्यः नियुत्वान् इनः' इति चत्वारीश्वरनामानीत्याचक्षते । अहं राष्ट्री ईश्वरी सर्वभूतानाम् । सङ्गमनी वसूनां विद्यावित्तात्मकानां तत्तदनुगुणं तेषुतेषु सङ्गमयित्री संयोजयित्री । चिकितुषी विदुषितरा सर्वज्ञा । कित ज्ञाने । सर्वगता वा । कित निवासे । सर्वस्रष्ट्री सर्वसमर्था वा । 'कित निर्माणे' इति वक्तव्यम् । 'यच्चिकेत सत्यमित् तन्न मोघम्' इत्यादिश्रवणात् । अथ च 'अहं सङ्गमनी, अहं वसूनां चिकितुषी' । समिति भगवतो नारायणस्य नाम । 'अकयप्रविसम्भूमसखहा विष्णुवाचकाः' इति चोक्तम् । सं सम्पूर्णगुणं भगवन्तं गमयति सात्विकानिति सङ्गमनी । यज्ञियानां यज्ञार्हाणां वसूनां सम्पदां देवानां च चिकितुषी स्रष्ट्री । देवानां बहुधा सृष्टिः श्रूयते । ब्रह्मणोऽपि भवन्ति, शिवादपि भवन्ति । इन्द्रादपि भवन्ति । काश्यपादपि भवन्ति । अत आह– अहं प्रथमा



चिकितुषी स्रष्ट्रीति । वसव इति देवानां समष्टिनाम । तथाह्यभिदधति–'आदित्या वसवो रुद्रा विश्वे ऋभव इत्यपि । सर्वदेवसमाख्या च द्वादशाष्टादिकेष्वपि' इति । अथच अहं यज्ञियानां यज्ञेष्वाराध्यानां देवानां प्रथमा । नारायणेन साकं स्वस्यैव प्रथमाराध्यत्वात् । यतो न जहाति नारायणमित्यहमित्युदिता हि सा । तां मां देवाः सुराः ज्ञानिनो वा व्यदधुः विविधं धारयामासुः, मनसा धारयामासुः, दध्युरिति यावत् । कुत्र दध्युः? पुरुत्रा पुरुषु स्थलेषु । यत्रयत्र नारायणस्य विशेषसन्निधानं तत्र सर्वत्र । 'यद्यद् विभूतिमत् सत्त्वम्' इति स्मरणात् । कथं दध्युः? पुरुत्रा पुरुं दध्युः, विशेषसन्निधानवर्तीं दध्युः । पुरुत्रा इति सप्तम्यर्थे द्वितीयार्थे च त्राप्रत्ययः । तथाहि पाणिनिः–'देवमनुष्यपुरुष-पुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' (अ.सू.५.४.५६) इति । कीदृशीं माम्? भूरिस्थात्राम् । भूरीति कनकनाम । 'जाम्बूनदं शातकुम्भं हाटकं भूरि-रस्त्रियाम्' इति । नित्यं कनके सन्निहिताम् । अथच ये भक्तिज्ञानाभ्यां भूरयस्तेषु सदा स्थिताम् । तेषां त्राणार्थं तेषु स्थितेति स्थात्रेत्युच्यते । 'भूरिस्थात्रां बहुभावेन प्रपञ्चात्मना कृतावस्थानाम्' इति व्याख्यानं तु स्वप्रज्ञाविलसित-मेव । पुनः किम्भूताम्? भूर्यावेशयन्तीम् । भूरि विपुलं ज्ञानं वित्तं वा भक्तेषु आवेशयन्तीं निवेशयन्तीम् । भूरि मोक्षाख्यं वा फलम् । आज्ञया वेशनं दान-मावेशनम् । आदरेण प्रीत्या दानमावेशनम् । आ सम्यक् सामस्त्येन दान-मावेशनम् । 'भूर्यावेशयन्तः' इति आथर्वणपाठे– भक्तानां भूरि भाग्यमावेशयन्तो देवा अपि स्वेषु तादृशदानक्षमताधानार्थं मामेव पुरुत्रा व्यदधुरित्यर्थः ।

अस्यामृचि तृतीयचरणे 'वि+अदधुः' इति, तुरीयचरणे च 'भूरि+आवेशयन्तीम्' इति च विश्लेषेण केवला त्रिष्टुप् ॥ ३ ॥

**(सं.भा.)** राष्ट्री जगदीश्वरी । गमयित्री वसूनाम् । यज्ञे आराध्यानां भगवद्रूपाणां प्रथमा चिकितुषी वेत्त्री । विविधं कल्पयन्ति देवाः । पुरुषु स्थानेषु । भूरिभिः रूपैः स्थिताम् । आवेशयन्तीमाविश्य प्रेरयन्तीम् ॥ ३ ॥

**मया॒सो॑ऽअन्न॑मत्ति॒योवि॒पश्य॑ति॒यᳶप्राणि॑ति॒यऽईं॑शृ॒णोत्यु॒क्तम् ।**
**अ॒म॒न्तवो॒मान्तऽउप॑क्षियन्तिश्रु॒धिश्रु॑तश्रद्धि॒वन्तैवदामि ॥ ४ ॥**

**मया॑ । सः । अन्न॑म् । अ॒त्ति॒ । यः । वि॒+पश्य॑ति । यः । प्राणि॑ति । यः । ई॒म् । शृ॒णोति॑ । उ॒क्तम् ॥ अ॒म॒न्तव॑ः । माम् । ते । उप॑ । क्षि॒य॒न्ति॒ । श्रु॒धि । श्रु॒त॒ । श्र॒द्धि॒+वम् । ते॒ । व॒दा॒मि॒ ॥ ४ ॥**

‘मया॒ सोन्न॑मत्ति॒’ इति, ‘यः प्रा॒णति॒ यः’ इति, ‘श्र॒द्धेयं॑ ते वदामि’ इति चाऽथर्वणानां पाठः । ‘श्र॒त्+धेय॑म्’ इति च प्रतृण्णम् । ‘प्राणिति’ इत्येव पाठं सायणः पठति ।

योयोऽन्नमत्ति स मयाऽत्ति । त्रिविधं बाह्यमन्नं भवति । ‘त्रेधा वा इदमन्नं विहितम् । अशनं पानं खाद इति’ इति हि श्रुतिः । अन्यच्चान्तरमन्नं भवति ज्ञानरतिरूपम् । उभयमप्यन्नं मदनुग्रहेणैव लोको लभते । तदुभयमानिनमनिरुद्धं चाहमेव नियमयामि । न केवलं वाग्देवता सती वाचमेव मुखेन व्याहार-यामि । किन्त्वन्नमप्यादयामि । यश्च लोके विविधं विचित्रं जगत् पश्यति स मयैव पश्यति । चक्षुर्देवतां सूर्यं चाहमेव हि नियमयामि । अथ च य आन्तरेण ज्ञानचक्षुषा वि = विष्णुं पश्यति तस्य तदपरोक्षज्ञानमपि मदधीनम् । ‘अकयप्रवि–’ इत्यादिस्मरणात् । उक्तो मुखव्यापारः । उक्तश्चक्षुर्व्यापारः । व्याख्याता अग्न्यादित्यौ वरुणश्च । अथ प्राणव्यापारस्य स्वायत्ततामाह– योयः प्राणिति स मयैव प्राणिति । सति हि प्राणने किमप्यत्ति । किमपि पश्यति । सर्वमूलमिदं प्राणनमपि मदायत्तमिति । मम तनयो हि प्राण इति प्राह । प्राणिति प्रश्वसिति । अन प्राणने । प्राणनिरोधः प्राणायामोऽप्यनेन व्याख्यातः । आथर्वणिकाः ‘प्राणति’ इति पेठुः । नायमनधातुः । किन्त्वणधातुः । कोऽर्थः? अण गतौ । गतिरवगतिश्च धात्वर्थः । ब्रह्म अणतीति ब्राह्मण इति यथा । तमेतं ब्रह्माणं सन्तं ब्राह्मणमाचक्षते परोक्षप्रियाः । तथाच यः प्राणति कर्मसु प्रवर्तते तदपि मदायत्तम् । न केवलम्, यः दृष्ट्वा भगवन्तं तमेव प्रकृष्टं नारायणमणति



प्राप्नोति मोक्षे तदपि मदायत्तमित्यपूर्वोऽयमाथर्वणिकानां पाठः । य ईं य एवोक्तं शृणोति, श्रुत्वाऽवगच्छति, नतु प्राणिन इव केवलं नादं शृणोति, एतदर्थमेव उक्तमिति पदमुपादत्त । अन्यथा पश्यतीतिवत्, केवलं शृणोतीत्येवावक्ष्यत् । उक्तं वेदोक्तं गुरुभिरुक्तं ब्रह्मतत्वं श्रुत्वावगच्छतीति च । सर्वाणीन्द्रियाणि च तदभिमानीनि दैवतानि च सर्वथा मदधीनप्रवृत्तिमन्तीत्येतदुक्तं भवति ।

मन्यत इति मन्तुर्मन्ता भवति । ये मामेवं सर्वनियन्त्रीममन्तवः अजानन्तो भवन्ति ते साधनपथात् प्रच्युताः उपक्षियन्ति उपक्षयन्ति विनश्यन्ति । क्षि क्षये । तृतीयोऽतिशये । उपपन्नश्च तेषामेष विनाशो विस्मृतमातृकाणामि-त्युपेत्याह । अथच ये मां मातरं जगज्जनकेन नारायणेन सहोपासते ते अमन्तवः । मन्तुरपराधः । न ते मातरि कृतापराधा इत्यतस्ते मम पुत्राः मामुप मातुर्मम समीपे क्षियन्ति निवसन्ति । त एव चोपरि नारायणसमीपे च निवसन्ति । क्षि निवासगत्योः ।

श्रुतिरस्यास्तीति श्रुतः । हे श्रुत अधीतशास्त्र, इदमिदानीं मयोक्तं च, वक्ष्य-माणं च श्रुधि शृणु । ‘श्रुशृणुपृकृवृभ्यश्छन्दसि’ (अ.सू.६.४.१०२) इति हेर्धिरादेशः । तद् यथा–‘तेषां पाहि श्रुधी हवम्’ । श्रुधीति विषयेऽस्मिन् स्वस्य तात्पर्यविशेषमवधारयति । अन्यत् शृणु वा जहि वा । इदं तु नियत्या श्रोतव्यम्, श्रुत्वा मन्तव्यम्, मत्वा निदिध्यासितव्यम् । निदिध्यास्य च ज्ञातव्यमिति । तदेव स्फुटमाह– श्रद्धिवं ते वदामि । यत् ते वदामि तत् त्वया श्रद्धिवं श्रद्धायुक्तं श्रोतव्यम् । श्रद्धिः श्रद्धाऽस्यास्तीति श्रद्धिवम् । मत्वर्थीयो वः । स यथा केशवान् केशवो भवति । श्रद्धया श्रोतव्यं वदामीत्यर्थः । ‘श्रद्धेयम्’ इत्याथर्वणिकाः । श्रदास्तिक्यम् । श्रद्धा आस्तिक्यबुद्धिः । श्रद्धेयमास्तिक्यबुद्ध्या स्वीकर्तव्य-मित्येतत् ।

अत्रोत्तरार्धे पादद्वयमप्येकादशाक्षरम् । पूर्वार्धे प्रथमपादे द्वादशाक्षराणि, द्वितीये दशाक्षराणीति द्वाविंशतिरेवाक्षराणीति केवला त्रिष्टुप् । आथर्वणानां पाठे प्रथम-

पाद एकादशाक्षरः । द्वितीयपादे 'शृणोति+उक्तम्' इति विश्लिष्यैकादशाक्षरता ॥ ४ ॥

**(सं.भा.)** योऽन्नमत्ति स मयाऽत्ति । य उक्तं शृणोति स मया ईं मयैव शृणोति । माममन्तवोऽजानन्तस्ते उपक्षीणा भवन्ति । हे श्रुतशास्त्र शृणु श्रद्धेयमिदम् ॥ ४ ॥

**अ॒ह॒मे॒वस्व॒यमि॒दंव॑दामि॒जुष्ट॑न्दे॒वेभि॑रु॒तमानु॑षेभिः ।**
**यङ्का॒मये॒तन्त॑मु॒ग्रङ्कृ॑णोमि॒तम्ब्र॒ह्माण॒न्तमृषि॒न्तंसु॑मे॒धाम् ॥ ५ ॥**

**अ॒हम् । ए॒व । स्व॒यम् । इ॒दम् । व॒दा॒मि॒ । जुष्ट॑म् । दे॒वेभिः॑ । उ॒त । मानु॑षेभिः ॥ यम् । का॒मयै॑ । तम्+त॑म् । उ॒ग्रम् । कृ॒णो॒मि॒ । तम् । ब्र॒ह्माण॑म् । तम् । ऋषि॑म् । तम् । सु॒+मे॒धाम् ॥ ५ ॥ १ ॥**

**॥ इति प्रथमो वर्ग्गः ॥**

'जुष्टं॑ दे॒वाना॑मु॒त मानु॑षाणाम्' इत्याथर्वणानां पाठः । बह्वृचानामियं पञ्चमी, आथर्वणानां तृतीया ऋक् ।

यद्यपि प्रायो नाऽत्मस्तवः क्रियते । अथापि पुत्रेषु युष्मासु करुणया अहं स्वयमेवेदं गुह्यं वदाम्युपदिशामि, इति सर्वान् भगवद्भक्तान् प्रत्याह । यथाऽहं भवतामुपदेष्ट्री न तथाऽन्यः कोऽपि ममाऽदेष्टेति स्वयमित्याह । अथापि स्वेन स्वतन्त्रेण भगवता यमितमिति भगवदिच्छानुगुणं वदामीति चाऽह । यदहं वदामि भवत्सु आविष्करोमि तद् देवैरमर्त्यैः, मनुष्यैर्मर्त्यैरपि ज्ञानिभिः पूर्वसृष्टौ जुष्टं प्रीत्या सेवितमनुसंहितम् । आथर्वणपाठे देवानां मनुष्याणां च सतां जुष्टमिष्टतमम् । 'जुषी प्रीतिसेवनयोः' । किं तत्? आह– यं कामये । यंय्यं रुद्रोऽयं भवत्विति कामये तन्तमुग्रं रुद्रं कृणोमि करोमि । यंय्यं ब्रह्माणं कामये तन्तं ब्रह्माणं कृणोमि । सर्वेषां देवानामुपलक्षणतया शृङ्गग्राहिकया ब्रह्मरुद्रौ कथितौ । ब्रह्मरुद्रावपि यत्कृपासादितस्वपदौ का कथाऽन्येषाम्? तथा यंय्यं जीवं यंय्यमृषिं



कर्तुं कामये तन्तं तत्तत्पदयोग्यं जीवं तन्तमृषिं करोमि । तथा यं कामये तं सुमेधां सुखमयप्रज्ञं मुक्तं करोमि । अन्यमसुमेधसं संसारिणं करोमि । अथापरं दुर्मेधसं तमोगं करोमि । यः सात्विकस्तं सुमेधसं करोति । राजसमसुमेधसम् । तामसममेधसम् ।

ननूग्र इति रुद्रोऽप्युच्यते । 'उग्रः कटप्रीर्दिग्वासाः' इति यादवप्रकाशः । उग्र इति रौद्रोऽपि स्यात् । स्यात् । तथाऽपि नात्र स्यात् । अयं हि लोके शाब्दबोधक्रमः । अनेकार्थेषु पदेषु यो मुख्योऽर्थः स प्रथमं ग्राह्यः । तदनुपपत्तौ ततोऽन्येऽर्थाः । दाशरथिरित्युक्ते प्रथमं रामस्मृतिः । तदनुपपत्तौ लक्ष्मणादयः । वासुदेव इत्युक्ते प्रथमं कृष्णप्रत्ययः । तदनुपपत्तौ बलरामादयः । मुख्ये हि सम्प्रत्ययः । एवं शब्दस्य यः प्रसिद्धोऽर्थः स प्रथमं गृह्यते । तदनुपपत्तावप्रसिद्धः । यथा राजेत्युक्ते नरपतिः प्रथमं गृह्यते । तदयोगे निशाकरः । अथच सिद्धपदानां सान्निध्येन सूचितोऽर्थः असिद्धपदस्य क्रियत इति सम्प्रदायः । अत्रापि ब्रह्मादिपदसाहचर्यात् सृष्ट्यादिप्रसङ्गाच्च रुद्र एव किल समुचितोऽर्थः । न यः कोऽपि रौद्रः पुरुष इति स्फुटं भाषापरिभाषाविदाम् । उत्तरत्र रुद्रपदेन प्रत्यभिज्ञानाच्च । उक्तं चैतत् सर्वं भगवत्पादेन सूत्रभाष्ये–'उग्रो रुद्रः । समुद्रेऽन्तर्नारायणः । प्रसिद्धत्वात् सूचितत्वाच्चार्थस्य । नचाविरोधे प्रसिद्धः परित्यज्यते' इति । अत्र स्फुटं केवला त्रिष्टुप् ॥ ५ ॥ १ ॥ * ॥

**(सं.भा.)** न केवलं देवैः । सर्वैरपि मानुषेभिः ज्ञानिभिः । उग्रं प्राप्तरुद्रपदम् । सुमेधां सुमेधसम् ॥ ५ ॥ १ ॥ * ॥

**अ॒हंरु॒द्राय॒धनु॒रात॑नोमिब्रह्म॒द्विषे॒शर॑वे॒हन्त॒वाऽउ॑ ।**
**अ॒हञ्जना॑यस॒मद॑ङ्कृणोम्य॒हन्द्यावा॑पृथि॒वीऽआवि॑वेश ॥ ६ ॥**

**अ॒हम् । रु॒द्राय॑ । धनुः॑ । आ । त॒नो॒मि॒ । ब्र॒ह्म॒+द्विषे॑ । शर॑वे । हन्त॒वै । ऊँ॒-इति॑ ॥ अ॒हम् । जना॑य । स॒+मद॑म् । कृ॒णो॒मि॒ । अ॒हम् । द्यावा॑पृथि॒वीइति॑ । आ । वि॒वे॒श॒ ॥ ६ ॥**

बह्वृचानामियं षष्ठी ऋगाथर्वणानां पञ्चमी ।

पञ्चात्मनो नारायणस्य दयिता पञ्चरूपा गदिता । अथोत्तरेण तृचेन वर्गेण श्रीभूदुर्गात्मिकां त्रिगुणमानिनीमात्मानं प्रस्तावयति–अहं रुद्राय। अहं तमोमानिनी दुर्गा सती शरवे रुद्राय हन्तवै तमोमानिनं जगत्संहारिणं रुद्रमपि हन्तुम्, धनुरातनोमि आततं तनोमि। 'हन्तवै' इति 'तुमर्थे सेसेन्–' (अ.सू.३.४.९) इत्यादिना तुमुनर्थे छान्दसस्तवै। अथ च धनुरिति भगवतः शार्ङ्गं धनुः। रमारूपं हि तत्। तथाच अहमेव भगवद्धनूरूपमात्मानं विस्तारयामीत्यर्थः। कथम्? पञ्च प्राणरूपान् बाणान् आरोप्य तनोमि । 'रुद्राय हन्तवै धनुरातनोमि । रुद्रं हन्तुमित्यर्थः। 'अहये हन्तवा उ' इतिवत्। उ एव' इति तत्वमञ्जरी। हननमपि न हिंसार्थम्। किन्तु शेषपददानेन तदनुग्रहायेति सूचनाय द्वितीयार्थे चतुर्थी। शृणाति हिनस्तीति शरुः । शरवे शरुं जगत्संहरणशीलमित्यर्थः । 'शरुं संहारशीलम्। शॄ हिंसायामिति धातोः' इति च। ब्रह्मद्विषे। परं ब्रह्म नारायणाख्यं क्वचिदद्विष्ट, द्विषन् अप्रीयमाण इवावर्तिष्ट, अयुद्ध च तेन, मूलरूपेण च राम-रूपेण च। तादृशं हन्तुं प्राणो बाणो बभूव। दुर्गा धनुर्बभूव। अथच पञ्चमुखो रुद्रः ब्रह्मणोऽपि पञ्चमुखत्वमसहमान इव तस्य पञ्चमं शिरश्चिच्छेदेति पुराणविदो वदन्ति । तेन च ब्रह्मद्विड् रुद्र उच्यते । तथाहि प्राचीनटीकाकाराः–'शरवे हिंसकाय ब्रह्मद्विषे चतुर्मुखस्य पञ्चममुखच्छेत्रे रुद्राय हन्तवै रुद्रस्य हननाय धनुरातनोमि विस्तारयामि' इति। ब्रह्मणो पञ्चममुखच्छेदनमपि मयैव तस्मिन् सन्निहितया कृतं भगवदिच्छानुगुणमिति। चतुर्मुखी हि सृष्टिश्चतुर्मुखात्–चत्वारो वेदाश्चत्वारो वर्णाश्चत्वार आश्रमा इत्यादि। पञ्चमुखी पञ्चमुखात्–पञ्चभूतानि, पञ्चेन्द्रियाणि, पञ्चप्राणा इत्यादि। यदपि रुद्रः संहारकाले प्रजाः शृणाति तदपि तदङ्गतया मयैव क्रियते। संहारकर्मणि भगवदङ्गतया स इदं सर्वं चकारेति न स पापभाजनम्। अहं चोज्जिहीर्षयैव तस्मै धनुरातनोमि। न केवलं तस्मायेव। योयः क्षत्रियो जनः शत्रुभिर्युध्यते तस्मै जनाय चाहमेव धनुरातनोमि। आतत्य च समदं कदनं करोमि । सहैव माद्यन्तीति समत् सङ्ग्रामः । अहमेव च



बाध्यबाधकतया एकस्य जयं तनोमि। अपरस्य पराजयम्। किञ्च याऽहं रुद्रस्य हननाय धनुरातनवम्, सैवाहं तस्य जनाय, न जायते येन तज्जनम्। अजननाय अपुनर्भवायेत्येतत्, समदं सततमदं नित्यानन्दं मोक्षं कृणोमि कृपया संसारं विनाश्य प्रतिपादयामीत्यर्थः। कृणोतिर्लोके हिंसार्थः। छन्दसि तु अप्रियं हिंसित्वा इष्टप्रदानार्थः। न केवलं रुद्राय, सर्वस्मै जनाय, पुनर्न जायत इति चरमशरीर-गताय सज्जनाय समदं मोक्षं कृणोमि । 'समदं सततप्रमदं मोक्षसुखम्' इति तत्वमञ्जरी। तामसाय च जनाय समदं नित्यानन्दं कृणोमि नाशयामि तमसि पातयित्वा। उक्तं दुर्गारूपम्। अथश्रीभूरूपे आह–अहं द्यावापृथिवी इति। अहमेव श्रीरूपा दिवमूर्ध्वलोकमाविवेश । भूरूपा पृथिवीं मनुष्यलोकमा-विवेश। संसारे ये द्युस्थाः देवादयः, ये च पृथिवीस्था मनुष्यादयः तान् सर्वानहमेव द्यावापृथिव्योराविष्टा त्रैलोक्यगता सृजामि पालयामि ज्ञानाज्ञानदानेन नियमयामि च। 'हन्तवा उ' इत्युकारः पूर्वत्रोत्तरत्र च अहंशब्देन समेति अहमेवेति। तेन सर्वथाऽन्यनिरपेक्षत्वं नारायणेन सह सर्वकर्मसु नित्ययोगं चाऽह। अत्रोत्तरार्द्धे 'कृणोमि+अहम्' इति पादयोर्विश्लेषेण केवला त्रिष्टुप्॥ ६ ॥

**(सं.भा.)** रुद्राय हन्तवै रुद्रं हन्तुम्। ब्रह्मद्विषे चतुर्मुखस्य पञ्चममुखच्छेत्रे। शरवे संहारकाय। समदं सततानन्दं मोक्षम्। द्यावापृथिवी द्यावापृथिव्यौ॥ ६ ॥

**अहंसुवेपितरमस्यमूर्द्धन्ममयोनिरप्स्व१न्तस्समुद्रे ।**
**ततोवितिष्ठेभुवनानुविश्वोतामून्द्यांवर्ष्मणोपस्पृशामि ॥ ७ ॥**

**अहम्। सुवे। पितरम्। अस्य। मूर्धन्। मम। योनिः। अप्+सु। अन्त-रिति। समुद्रे॥ ततः। वि। तिष्ठे। भुवना। अनु। विश्वा । उत। अमूम्। द्याम्। वर्ष्मणा। उप। स्पृशामि॥ ७॥**

'भुवनानि विश्वोतामूम्' इत्याथर्वणः पाठः। 'ततो वि चष्टे' इति सायणः पठति।

अहमस्य विश्वस्य पितरं स्रष्टारं ब्रह्माणं मूर्धन् मूर्ध्नि सीमन्तप्रदेशे सुवे जनयामि। षूञ् प्राणिगर्भविमोचने। मम योनिः कारणभूतः अप्सु अन्तः

समुद्रे। 'यमन्तः समुद्रे कवयोऽवयन्ति' इत्युक्तो नारायणः। 'समुद्रेऽन्तर्नारायणः' इति ह्याह भगवत्पादः । 'यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधामिति ब्रह्मादीनां देव्यधीनत्वमुक्त्वा, मम योनिरप्स्वन्तः समुद्र इति तस्या विष्ण्वधीनत्ववचनेन विष्णोः सर्वोत्तमत्वं प्रतिपाद्यते' इति तत्वप्रदीपे। ऐतरेयभाष्ये चैतदुक्तम्–'यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधामिति ब्रह्मशिवादीनां देव्यधीनपदप्राप्तिमुक्त्वा, तस्या अपि भगवदधीनत्वम्–मम योनिरप्स्वन्तः समुद्रे, ततो वि तिष्ठे भुवनाऽनु विश्वा, परो दिवा पर एना पृथिव्येत्याह। अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ, अहं सुवे पितरमस्य मूर्धन्निति ब्रह्मरुद्रयोः सृष्टिः संहारश्चोक्तौ' इति। तेन रुद्रस्य सृष्टिः ब्रह्मणः संहारश्चोपलक्षणीय इत्यर्थः। अथ कोऽयं ब्रह्मणो देव्या मूर्ध्नि प्रसवो नाम? शृणुमो भगवतो नाभितः प्रसूत इति। अपूर्वमिदमश्रुतपूर्वं देव्या मूर्ध्नि जात इति। अश्रुतपूर्वमित्येव कृपया देवी श्रावयति– अहं प्रसुवे पितरमस्य मूर्धन्निति । अपूर्वत्वादेवास्य प्रमेयस्य बहवो बहुधा मन्त्रवर्णं वर्णयन्ति। 'अस्य परमात्मनः मूर्धन् मूर्धन्युपरि 'द्यौः पिता' इति श्रुतेः पितरं दिवम् अहं सुवे प्रसुवे' इति केचित्। 'अस्य भूलोकस्य मूर्धन् मूर्धन्यहं पितर-माकाशं सुवे' इति च। 'अस्य दृश्यमानस्य प्रपञ्चस्य मूर्धन् मूर्धनि उपरि-भागे सत्यलोके पितरं प्रपञ्चस्य जनकं विधातारमहं सुवे जनयामि' इति च। 'अस्य विश्वस्य मूर्धन् अग्रे' इति च। 'सुवे प्रेरयामि' इति च। एवं स्थिते तत्वमञ्जरीकार आह–'अहमस्य पितरं ब्रह्माणं मूर्ध्नि सुषुम्नया सुषुवे' इति। पद्मनाभतीर्था अप्याहुः–'अस्य जगतः पितरं ब्रह्माणं मूर्द्धनि सीमन्तप्रदेशे सुवे जनयामि' इति। एवमर्थकथनेन श्रुतेरपूर्वार्थत्वं प्रदर्शितम्। ब्रह्मणो बहुधा जननं श्रूयते। तत्रेयमेका प्रथमा सृष्टिः। अन्येऽप्यर्था अविरुद्धा अनुमताः। यद्यपि सुवे इति वर्तमानवचनं जनयामीति। अथापि सृष्टेः पूर्वं किल जनयामासेति तत्वमञ्जरीकारः लटं लिडर्थमाह 'सुषुवे' इति।

अथ कथं भर्तारं नारायणं मम योनिरिति कारणत्वेनाऽह? नारायणात् तस्या अपि पराधीनविशेषावाप्तिरूपा जनिरस्तीति। पद्मनाभतीर्थास्तु अभिप्रायान्तर-



माविश्चक्रुः–'मम माहात्म्यकारणभूतः समुद्रेऽन्तर्नारायणः इत्यर्थः' इति । अस्मिन् पक्षे न शङ्कालेशोऽपीति।

नारायणस्य तन्माहात्म्यकारणत्वं स्फुटमाह– ततः यः समुद्रे अप्स्वन्तः तस्य नारायणस्य प्रसादादेव अहं विश्वानि भुवनानि चतुर्दश अनुविश्य वि तिष्ठे तेन सह विविधरूपा तिष्ठामि। तत्रानुविष्टाऽपि ततो विलक्षणा तिष्ठामि। जगति गताऽपि वि तिष्ठे विष्णावेव तिष्ठामि। उत तत एव अमूं संसारिणां विप्रकृष्टां द्यां ज्योतिर्मयीं मुक्तिमपि वर्ष्मणा देहेन उपस्पृशामि। सदा तत्र मूर्तिमती तिष्ठामि नित्यमुक्ता।

अत्र पूर्वार्द्धे 'अप्सु+अन्तः' इति विश्लेषेणाक्षरपूर्तिः। वस्तुतस्तु कम्प एव न्यूनतां परिहरति। उत्तरार्द्धे च 'विश्वा+उतामूम्' इति पादयोर्विश्लेषेण केवला त्रिष्टुप्॥ ७॥

**(सं.भा.)** अस्य जगतः पितरं चतुर्मुखम्। मूर्धनि सीमन्ते सुषुम्नया सुषुवे। मम एतादृशमहिम्नः। योनिः कारणभूतः। अप्सु अन्तरिति नारायणपदं निरुच्याऽह। विश्वानि भुवनानि अनुविश्य विविधं तिष्ठामि। वर्ष्मणा व्याप्नोमि। न केवलं ज्ञानेन॥ ७॥

**अहमेववातऽइवप्रवाम्यारभमाणाभुवनानिविश्वा।**
**परोदिवापरऽएनापृथिव्यैतावतीमहिनासम्बभूव ॥ ८॥**

**॥ हरिः ओम्॥**

**अहम्। एव। वातः+इव। प्र। वामि। आ+रभमाणा। भुवनानि। विश्वा॥ परः। दिवा। परः। एना। पृथिव्या। एतावती। महिना। सम्। बभूव॥ ८॥**

**॥ इति द्वितीयो वर्ग्गः॥**

**॥ इत्यम्भ्रिणीसूक्तं सम्पूर्णम्॥**

'महिम्ना सं बभूव' इत्याथर्वणः पाठः ।

तत इति वर्तते। अथ तत एव तदाज्ञया तदनुग्रहादेव च विश्वानि आसत्यान्तानि भुवनानि स्रष्टुमारभमाणा, अहमेकैवासहाया, ब्रह्मादीनामपीतः परं स्रक्ष्यमाणत्वात्। प्रवामि प्रकटं प्रेरयन्ती चरामि। 'प्र' इति भगवद्वचनं वा। कथम्? वातइव। यथा वायुः सर्वत्रगस्तथा। अथच वायोः सृष्टेः पूर्वम् अहमेव वातइव प्रवामि श्रीभूरूपाभ्याम्। यदनुग्रहादेवं सर्वमहं निर्वहामि स मे योनिः परो दिवा पर एना पृथिव्या। 'परो दिवेति पञ्चम्यर्थे तृतीया। द्यावापृथिव्योः श्रीभूम्योः परः समुद्रशायी। अहम् एतावती यथोक्तप्रकारा महिम्ना नाधिकेति' इति तत्वप्रदीपे ।

तथाच दिवा दिवः द्युमानिन्याः श्रीरूपाया मत्तः पर उत्तमः । 'परस् इति सकारान्तं परस्तादित्यर्थे' इत्येके । न नो हानिः । उभयथाऽपि स्यात् । एना एनया । 'द्वितीयाटौस्स्वेनः' (अ.सू.२.४.३४) इति इदम एनादेशः । अनन्वादेशेऽपि क्वचिद् भवतीति वक्तव्यम् । प्रयोगदर्शनादेव । अथ 'सुपां सुलुक्–' (अ.सू.७.१.३९) इति तृतीयाया आच् । एना एतस्याः सर्वैरपि दृश्यमानप्रतीकायाः। यथा प्रतिमायां दृष्टायां भगवान् दृष्ट इत्याचक्षते। प्रतिमायां वज्रकवचेनालङ्कृतायामद्य वज्रकवचालङ्कृतो भगवानिति । पृथिवीमानिन्या भूरूपायाश्च मत्तः परः । अहं तु महिना महिम्ना एतावती भगवदितरसकलनियामकत्वसमानाधिकरणभगवन्नियम्यत्ववती सम्बभूव । महिम्नोऽनपायित्वं समर्थः । सदा सङ्गता भवामि ।

अत्र पूर्वार्द्धे–'प्र वामि+आरभमाणा' इति, उत्तरार्द्धे–'पृथिव्या+एतावती' इति च पादयोर्विश्लेषेण केवला त्रिष्टुप् ॥ ८ ॥ २ ॥ ✻ ॥

**अयि जननि कृपाङ्कुरस्तवेषत्**
**पततु जघन्यतमे जडेऽपि पोते ।**
**भगवति कृतिनां मदोद्धतानां**
**शिरसि पदं निदधाति जातगर्वः ॥**



**जयति जगति देवो देवकीप्रेमसूनु-**
**र्जयति जगदधीशा कृष्णवामाङ्कभूषा ।**
**जयति जगति मध्वो दुर्मतध्वान्तभानु-**
**र्जयति जनिततोषाऽऽचार्यगोविन्दभाषा ॥**

**इदमाचार्यगोविन्दो विनेयजनवाञ्छया ।**
**यथामनीषं व्याचख्यावम्भ्रिणीसूक्तमद्भुतम् ॥**

**इत्याचार्यगोविन्दस्य कृतिषु अम्भ्रिणीसूक्तभाष्यं सम्पूर्णम्**

—०—

**(सं.भा.)** मम योनिः दिवः परः। पृथिव्याश्च परः । अहं तु महिना एतावत्येव सम्बभूव ॥ ८ ॥ २ ॥ ✻ ॥

**[१]इत्यम्भ्रिणीसूक्तसङ्ग्रहभाष्यं मनोरमम् ।**
**रमारमणभक्तेन कृतं गुरुकृपाबलात् ॥**

**इत्याचार्यगोविन्दस्य कृतिषु अम्भ्रिणीसूक्तसङ्ग्रहभाष्यं सम्पूर्णम्**

—०—

१. निचृदनुष्टुबियम्। **'न वा एकेनाक्षरेण च्छन्दांसि वियन्ति'** इत्यस्य स्फुटमुदाहरणम्। **'पञ्चमं लघु सर्वत्र'** इत्यस्य च भङ्गोऽयम्। अथापि मधुरा च्छन्दोलयगतिः।




**आचार्यगोविन्दप्रणीतं भाष्यम्**

**सङ्ग्रहभाष्यं च**



**ॐ ॥ मान्यो वदान्यो हे मन्यो कस्त्वदन्यो जगत्त्रये ।**
**धन्योऽद्य पण्डितम्मन्यो व्याचिकीर्षे तव स्तवम् ॥**

**स्वैरं काकाः कोकिलन्तु खलन्तु सुजना अपि ।**
**सम्मुखे नरसिंहस्य योयो योयः स एव सः ॥**

अथातो मन्युसूक्तं व्याख्यास्यामः ।

वैदिकवाङ्मये सूक्तद्वयमिदं द्विः पठ्यते । ऋग्वेदे दशममण्डले (सू.८३-४), अथर्ववेदे च चतुर्थकाण्डे (सू.३१-२) ।

तत्रतत्र किञ्चिदिव पाठभेदमृते सर्वमन्यत् समानम् । व्यत्यस्ता चानुपूर्वी सूक्तयोः । ऋग्वेदे प्रथमं (८३) सूक्तमाथर्वणे द्वितीयम् (३२) । आथर्वणे प्रथमं (३१) सूक्तमृग्वेदे द्वितीयम् (८४) इति ।

उभयोरपि सूक्तयोर्मन्युसूक्तमित्येव नाम पठन्ति बह्वृचाः । आथर्वणास्तु 'यस्ते मन्यो' (३२) इति सेनानियोजनसूक्तमाहुः । 'त्वया मन्यो' (३१) इति सेनानिरीक्षणसूक्तम् । प्रथमं निरीक्षणं पश्चान्नियोजनमिति निरीक्षणसूक्तं पूर्वं पेठुः ।

ऋषिरप्यन्यः । बाह्वृच्ये तापसस्य मन्योरार्षम् । आथर्वणे तु ब्रह्मास्कन्दस्य ।

तत्र बह्वृचानामृष्यादीनाह कात्यायनः सर्वानुक्रमण्याम्–'यस्ते मन्यो, मन्युस्तापसः, मान्यवं तु, जगत्यादि । त्वया मन्यो, चतुर्जगत्यन्तम्' इति । अयमर्थः– 'यस्ते मन्यो' इत्यतः, 'त्वया मन्यो' इत्यतश्च परं 'सप्त' इत्यनुवर्तते– 'अपश्यं सप्त' इति पूर्वसूत्रात् । तथाहि परिभाषासूत्रम्–'सूक्तसङ्ख्याऽनुवर्तते

आऽन्यस्याः सूक्तसङ्ख्यायाः’ इति। तथाच ‘यस्ते मन्यो’ इति, ‘त्वया मन्यो’ इति च सूक्तद्वयं सप्तर्चमित्युक्तं भवति। मन्युस्तपसः पुत्र ऋषिः। मन्युर्देवता। ‘मान्यवं तु’ इति तुकारेणोत्तरसूक्तस्याप्येते एवर्षिदेवते इत्याह। तथाहि परिभाषासूत्रम्–‘तु-हि-ह-वै-तच्छब्दविशिष्टान्यृषि-दैवत-च्छन्दांसि द्वि-त्रि-चतुः-पञ्च-षट्-सूक्तभाञ्जि यथासङ्ख्यम्’ इति। प्रथमसूक्ते प्रथमाया ऋचश्छन्दो जगती। अर्थादन्याः षट् त्रिष्टुभ इत्युक्तं भवति। तथाहि परिभाषासूत्रम्–‘अनादेशे त्विन्द्रो देवता, त्रिष्टुप् छन्दः’ इति। द्वितीये सूक्ते त्वन्त्याश्चतस्रो जगत्यः। तेनाऽद्यास्तिस्रस्त्रिष्टुभ इत्युक्तं भवति।

आथर्वणाः किञ्चिदिवान्यथाऽऽहुः। ‘त्वया मन्यो’ इत्यत्र प्रथमातृतीये त्रिष्टुभाविति न विवादः। अन्त्यास्तिस्रो जगत्य इति च। द्वितीया बह्वृचानां त्रिष्टुप्; आथर्वणानां भुरिक् त्रिष्टुप्। एवं चतुर्थी बह्वृचानां जगती। आथर्वणानां भुरिगेव त्रिष्टुप्। अत्र वक्तव्यविशेषं तत्रतत्रैव वक्ष्यामः॥

इदमत्र विम्रष्टव्यं भवति। बह्वृचा भणन्ति–ऋषिर्मन्युः, देवता च मन्युरिति। किमुक्तं भवति? तपसः पुत्रो मन्युरिति स्यान्नाम कश्चिद् विप्रो वा राजर्षिर्वा यः सूक्ते एते ददर्श, कस्मिंश्चिदविज्ञाते पुनरायोधनावसरे। अस्तु नाम। अथ मन्युरिति का देवता? केचिदाचक्षते क्रोधाभिमानी देवो मन्युरिति। अयि भोः, नोत्तरमलाभि। क्रोधाभिमानी देवः क इति वक्तव्यम्।

ननु ‘रुद्रश्च क्रोधसम्भवः’ इति स्मरणात् क्रोधाभिमानी रुद्रः स्यात्। स्यादपि। यस्य क्रोधात् स्वयं रुद्रोऽपि सम्बभूव स एव मन्युरिति तु सूक्तम्। तेन रुद्रान्तर्यामी हिरण्यकशिपौ दर्शितमन्युरिह नरसिंह एव देवतेति सुन्दरम्।

मन्युरिति मुख्यतो ज्ञानमुच्यते। मन ज्ञान इति हि धातुपारायणिकाः पठन्ति। क्रोध इति पाश्चात्योऽर्थः। क्रोधमूलत्वान्मन्युर्युद्धमिति च। यस्य क्रोधोऽपि ज्ञानात्मकः, न द्वेषमूलः, स मन्युर्नरसिंह इति मधुरमनुसन्धानम्।



अवगतं का देवतेति। अथ क ऋषिस्तापसो मन्युरिति? स्यान्नाम कश्चित् तन्नामा पुरातनो राजर्षिः। आचार्यमध्वस्तु किञ्चिदपूर्वमर्थान्तरं प्रस्तौति। तथाहि महाभारततात्पर्यनिर्णये–

‘स्मरन् नृसिंहं भगवन्तमीश्वरं स मन्युसूक्तं च ददर्श भक्त्या।’(२७.१४०)

‘यस्ते मन्यो इत्यतो नारसिंहं सोमं तस्मै चाऽर्पयच्छोणिताख्यम्’ (१४१)

एकस्यापि मन्त्रस्य बहवो भवन्ति द्रष्टारः। तेन तापसो मन्युरप्येतत् सूक्तं ददर्श। ब्रह्मास्कन्दोऽपि। दुःशासनस्य हृदयं विदारयन् भीमसेनोऽपि। तेन सोऽप्यृषिः सूक्तद्रष्टा।

अथचान्यदत्र रहस्यं परिस्फुरति। भीमसेनोऽपि हि तापसो मन्युः। स किल प्रधनात्पूर्वं द्वादश वत्सरान् वने तापसो बभूव। तेन च कौरवेषु प्रवृद्धमन्युश्च। ‘दर्शतं’ इति वेदेषु स्तुत इति तस्य मन्युरपि ज्ञानात्मक एव।

तप इति च परं ब्रह्मोच्यते। ‘तपो ब्रह्मेति’ इति हि तैत्तिरीयाः पठन्ति। तस्यायमान्तरो भक्त इति, मूलरूपे च तस्यायं साक्षात् तनय इति च तापसो भीमसेनः।

एवं ब्रह्मास्कन्द इति च तदन्तर्नियामको वायुरेवोच्यत इति सुवचम्। स हि मुख्यतो ब्रह्मास्कन्दनामा ब्रह्मणः पदमास्कन्त्स्यतीति। स्कन्दिर् गतौ।

न वयं जानीमहे का तापसस्य मन्योः, का वा ब्रह्मास्कन्दस्याध्वरगाथेति। कौरवपाण्डवयोर्मन्यौ युद्धे भीमसेनस्य मन्योः कथेयमिति तु मनसि लगति। अतो भीमसेनपरमेवार्थं समग्रस्य सूक्तद्वयस्य प्रदर्शयिष्यामः।

**॥ हरिः ओ३म् ॥**

**यस्ते॑म॒न्योवि॑धद्वज्रसायक॒सह॒ऽओज॑ᳶपुष्यति॒विश्व॑मानु॒षक्।**
**सा॒ह्याम॒दास॒मार्य्य॒न्त्वया॑यु॒जासह॑स्कृतेन॒सह॑सा॒सह॑स्वता॥**

॥ १ ॥

**यः । ते॒ । म॒न्यो॒इति॑ । अवि॑धत् । व॒ज्र॒ । सा॒य॒क॒ । सह॑ः । ओज॑ः । पु॒ष्य॒ति॒ ।
विश्व॑म् । आ॒नु॒षक् ॥ स॒ह्याम॑ । दास॑म् । आर्य॑म् । त्वया॑ । यु॒जा ।
सह॑ः+कृतेन । सह॑सा । सह॑स्वता ॥ १ ॥**

आथर्वणपाठे तृतीयपादे वयमित्यधिकं पठ्यते–‘साह्याम दासमार्यं त्वया युजा वयम्’ इति । अन्यत् समानम् । तेन तृतीयस्त्रयोदशाक्षरः पादः । प्रथम एकादशाक्षर इति संहत्य (११+१२+१३+१२=) अष्टचत्वारिंशदक्षरेति जगती । बाह्वृच्ये तु प्रथमपादे ‘मन्यो+अविधत्’ इति, तृतीयपादे ‘साह्याम दासमारियम्’ इति च विश्लेषेण द्वादशाक्षरता । इतरौ पादौ स्फुटं द्वादशा-क्षराविति केवला जगती ॥

‘विश्वान् देवान् जगत्याविवेश’ इति श्रुतिः । सर्वच्छन्दोमानिन्यो देवस्त्रियो वारुणी च जगतीदेवताः । द्वादशात्मन आदित्यगतस्य विष्णोः प्रियं छन्दः ।

दुःशासनवक्षसः पर्युक्षितं क्षतजमीक्षमाणः पृक्षो भीमसेन आह– यस्ते मन्यो । मन्यते जानाति सर्वमिति, प्रकृते च सर्वं दौःशासनं दुष्कृतमिति, तेन च तस्मिन् जातक्रोध इति मन्युर्नरसिंहः । ‘मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा’ इत्याह यास्कः ।

वयं तु मन्यतेर्ज्ञानकर्मणः क्रोधकर्मणश्चेत्यवादिष्म । हे मन्यो ज्ञानमयक्रोधात्मन् नरसिंह, यस्ते त्वामविधत्, तुभ्यं वा । विध विधाने, यथाविधानं परिचर्यां विधत्ते स मद्विधो जनः विश्वं समग्रं सह ओजश्च पुष्यति पालयति वर्धयति च सङ्ग्रामे ।

सह इति किमुच्यते? किमोज इति? अन्यैरनभिभाव्या शक्तिः सहः । अजेयत्वमित्येतत् । अन्येषामभिभावयित्री शक्तिरोजः । सर्वजयित्वमित्येतत् । तथाह्युक्तम्–‘पराभिभवशक्तता । ओजस्त्वनभिभाव्यत्वं सह इत्युच्यते बुधैः’ इति ।

कीदृशं सह ओजश्च? आनुषक्, अनुषक्तम्, निरन्तरसम्बद्धम्, कदाऽप्यनप-गतम् ।



मन्युं वज्रेति सायकेति सम्बोध्य प्रसादयति । शत्रुनिबर्हणे त्वमिन्द्रस्य वज्रमिव, अर्जुनस्य सायकइवेति । ‘महद् भयं वज्रमुद्यतम्’ इति ह्यामनन्ति ।

अथच ‘वर्जनाद् वज्रमुच्यते’ । शत्रुवर्जनाद् दोषवर्जनाद् वा वज्रः । वजो ज्ञानम् । वज गतौ । रं रमणम् । ज्ञानरतिरूपत्वाद् वज्रः, वजति रमते चेति । वजो रमणं चानेनेति वा । एवं शत्रुसेनां प्रति वजन् राययति नाशयति शत्रूनिति च । शत्रून् प्रति व्रजनाद् वा वज्रः ।

एवं स्यति शत्रूणामन्तं करोतीति सायकः । अयो ज्ञानम् । कं सुखम् । ताभ्यां सहितोऽयं सायकः । साययतीति वा सायकः । अथ क इति वायुरुच्यते । अयेन ज्ञानरूपेण वायुना सहित इति सायकः । पञ्चात्मको मारुतिरेव हि भगवतो बाणाः ।

त्वया युजा सहायभूतेन वयं पाण्डवाः, आत्मनि वा बहुवचनम्, दासमार्यं च सह्याम मर्षयेम । षह मर्षणे । दीर्घोऽर्थविशेषार्थे । परैरनभिभूताः सन्तः परानभिभवेमेत्यर्थः । चुरादेः सहतेर्णिजभावपक्षे लिङि रूपं सह्यामेति ।

को दासः? क आर्यः? दस्यतीति दासः । दसु उपक्षये । लोकक्षयहेतुर्दुर्जन-समुदायः । कौरवबलमित्येतत् । ननु तत्र भीष्मद्रोणादयः सन्तोऽपि सन्त्यदासाः? सत्यं सन्ति । अत एवाऽह दासमार्यमिति । दुष्टपृष्ठगोपतया कृतापराधम् आर्यं पूज्यं भीष्मद्रोणादिकमपि सह्यामेति ।

कीदृशेन युजा त्वया? सहस्कृतेन सहसा सहस्वता ।

अन्येषामपि सहः, विशिष्य ममेदं सहः अजेयत्वं त्वयैव कृतं दत्तमिति सह-स्कृतेन । स्वयं च सहस्वता । स्वरूपभूतयाऽनभिभाव्यताशक्त्या युक्तेन, केनापि कदाऽप्यजितेन । अथ च सहते भक्तापराधमिति सहसा भक्तेषु पर-मदयालुना । भक्तापराधसहिष्णुना । ‘अभक्तजनसंहारी भक्तानामभयप्रदः’ इत्येतत् तदुक्तं भवति । सहसा स्वयं बलस्वरूपेणेति वा ॥ १ ॥

## सङ्ग्रहभाष्यम्

**ॐ ॥ नत्वा स्तुतं च स्तोतारं नरसिंहनरोत्तमौ ।**
**वक्ष्यामि सङ्ग्रहेणार्थं मुहुर्मान्यवसूक्तयोः ॥**

वदन्ति सप्तर्चस्य सूक्तद्वयस्य मन्युस्तापस ऋषिः, मन्युर्देवतेति । तपसाऽऽराधित-नरसिंहः कौरवेषु प्रवृद्धमन्युर्भीमसेन ऋषिरिति सुन्दरम् । तेन स्तुतः समिद्ध-मन्युर्नरसिंहो देवता । दुःशासनवधोद्यमे दृष्टं सूक्तद्वयम् । प्रथमे प्रथमा जगती । अपराः षट् त्रिष्टुभः । द्वितीये प्रथमास्तिस्रश्च । अन्त्याश्चतस्रो जगत्यः ।

वज्रसार, सायकवत् परान्तक, यः तेऽविधत् त्वां परिचरति सः सर्वमनुषक्तं सहः परैरनभिभाव्यं बलम्, ओजः परानभिभवच्च बलम्, पुष्यति स्वस्मिन् वर्धयति । सहः+कृतेन परैरनभिभाव्यानस्मान् कुर्वता सहसा स्वयं बलस्वरूपेण सहस्वता अपराधसहिष्णुना च त्वया युजा सहायेन सता वयं दासं लोकक्षयहेतुं दुर्योधना-दिकम् , आर्यं पूज्यम्, अथापि परपक्षत्वेन निग्राह्यं भीष्मादिकं च साह्याम सह्याम निःशेषमभिभवेम ॥ १ ॥

**मन्युरिन्द्रो मन्युरेवास देवो मन्युर्होता वरुणो जातवेदाः ।**
**मन्युं विश ईळते मानुषीर्याः पाहि नो मन्यो तपसा सजोषाः ॥ २ ॥**

**मन्युः । इन्द्रः । मन्युः । एव । आस । देवः । मन्युः । होता । वरुणः । जात+वेदाः ॥ मन्युम् । विशः । ईळते । मानुषीः । याः । पाहि । नः । मन्यो-इति । तपसा । स+जोषाः ॥ २ ॥**

तृतीयपादे ‘मन्युर्विश ईडते मानुषीर्याः’ इत्याथर्वणः पाठः । सर्वे पादा एका-दशाक्षरा इति स्फुटं त्रिष्टुप् । शची त्रिष्टुब्देवता । ‘इन्द्रस्य त्रिष्टुबिह भागो अह्नः’ इति श्रुतेः । एकादशात्मा रुद्र इत्येकादशाक्षरा त्रिष्टुप् रुद्रस्य प्रियं छन्दः । तेन च्छन्दसा रुद्रान्तर्यामी मन्युः स्तूयत इति सुन्दरम् ।



इन्द्रे स्थित्वा देवानां जयप्रदोऽपि मन्युरेव । ‘ब्रह्म ह देवेभ्यो विजिग्ये’ इति हि श्रुतिः । इन्द्र इति प्राणोऽप्युच्यते । तेनेन्द्रे प्राणावतारे मयि स्थित्वा दुः-शासनदमनश्च स एव । स एवेन्द्रावतारेऽर्जुने च स्थित्वा तस्य विजयप्रदः । स मन्युरेव सम्प्रति देवो वासुदेवो बभूव । योऽर्जुनसारथिर्भूत्वा दिदेव चिक्रीड । प्रळयाग्नौ जीवानां होता रुद्रः । वस्तुतस्तु रुद्रान्तर्यामी नरसिंह एव हि होता । अथच रुद्रावतारे द्रौणौ स्थितः सन् शिबिरदाहेन सर्वपञ्चालान् होष्यंश्च स एवेति भाविनमर्थं स्मरन्निवाऽऽह । पापिनो नरकाग्नौ जुहोतीति यमश्च होता । तस्मिन् स्थितः पापिनां नरकयातनाप्रदश्च मन्युरेवाऽऽस नरसिंहः । यमावतारं युधिष्ठि-रमधिष्ठाय तस्य निर्मन्युताप्रदश्चायं मन्युरेवाऽऽस । अस्मिन्नध्वराग्नौ मयि स्थित्वा शत्रूणां होता च मन्युरेव ।

मन्युरेव वरानन्दत्वाद् वरुणः । दुर्योधनादीनज्ञानेनाऽऽवृणोतीति वरुणः । भीष्मा-दींश्च तमोगुणेन । अस्माकं विजयदानेन वरं स्थानं सुखं वा उन्नयतीति च वरुणः । तथाह्यृग्भाष्ये– ‘आवृणोतीति वरुणस्तमसाऽज्ञानतोऽपि वा । वर-मुन्नयतीत्यस्माद् वरानन्दत्वतोऽपि वा’ इति । ‘णकारो बलम्’ इति श्रुतेर्व-रबलत्वाच्च वरुणः ।

जाता वेदा अनेनेति जातवेदाः । अयमेव हि प्रथमं ब्रह्मणो वेदोपदेष्टा । वक्त्री वेदान् वाजिवक्त्रा च मूर्तिः । जातंजातं वेत्ति चायम् । वैश्वानरे सूर्ये वा स्थितो जातं वस्तुजातं प्रकाश्य वेदयति चायम् ॥

इन्द्र इत्यष्टमकक्ष्यागत उक्तः । होता यमो द्वादश्याम् । वरुणस्त्रयोदश्याम् । जातवेदाः पञ्चदश्यामिति तारतम्यक्रमोऽप्यनुसृतः । सर्वेषां देवानां चेदमुप-लक्षणम् । सर्वदेवगतः सर्वचेष्टकः सर्वदेवनामा च मन्युरित्येतदुक्तं भवति ।

अथ पञ्चात्मा भगवान् स्तूयते– मन्युरेवेन्द्रः प्रद्युम्नः सृष्टिकर्ता । ‘प्रद्युम्नश्चेन्द्र-नामकः’ इति हि स्मरन्ति । मन्युरेवाऽऽस देवो वासुदेवो मोक्षदः । नामैकदे-शग्रहणम् । मन्युर्होता प्रळयाग्नौ जीवजातहोता सङ्कर्षणः । मन्युर्वरुणः स्थित्य-र्थमावृणोति जगदित्यनिरुद्धः । मन्युर्जातवेदा नारायणः ।

एवं पञ्चात्मानं सर्वदेवगतं सर्वचेष्टकं सर्वदेवनामानं च मन्युं याः मानुषीः मननशीलाः, विशः विशन्ति भगवन्तमिति ज्ञानिनः प्रजाः ईळते स्तुवते । ईड स्तुतौ । बाह्वृच्ये डस्य ळः । 'अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः' इति ह्यभिदधति । अत आथर्वणानाम् 'विश ईडते' इत्येव पाठः । जातवेदाश्च मन्युरिति विश ईडत इत्याथर्वणपाठेऽन्वयः ।

एवं वैदिकानां द्विविधो ळकारो भवति– डकारादेशरूपः स्वतन्त्रश्चेति । स्वतन्त्रस्य ळाळुको भगवान् देवता । डकारादेशरूपस्य तु डरक एव । पाणिनीयास्तु स्वतन्त्रं ळकारं न पठन्ति । किं कारणमिति त एव प्रष्टव्याः ।

स त्वमेवमीडित ऋषिभिर्मन्यो नः पाण्डवपक्षीयान् विजयेन संयोज्य पाहीति । अस्माभिश्चीर्णेन त्वत्तपसा व्रतेन, द्वादशवत्सरान् वने, वस्तुतस्तु सदा, अस्मासु सजोषाः, समानं जुषत इति समानप्रीतिः सन् सुप्रीतो वरदो भवेति । जुषी प्रीतिसेवनयोः ॥ २ ॥

**(सं.भा.)** मन्युः नरसिंह एव इन्द्रः प्रद्युम्नः । स एव देवो वासुदेवः । होता संहर्ता सङ्कर्षणः । वरुण इति चानिरुद्धः । पालनार्थं जगदावृणोतीति । जातवेदा नारायणः । जातञ्जातं वेदयत इति । एवं पञ्चात्मानमेनं मननशीलाः प्रजाः स्तुवन्ति । तादृश मन्यो मदीयतपसा तोषितस्त्वं नः सर्वान् स्वपक्षीयान् पाहि । सजोषाः सर्वत्र समानप्रीतिः सन् ॥ २ ॥

**अभीहिमन्योतवसस्तवीयान्तपसायुजाविजहिशत्रून् ।**
**अमित्रहावृत्रहादस्युहाचविश्वावसून्याभरात्वन्नः ॥ ३ ॥**

**अभि । इहि । मन्यो इति । तवसः । तवीयान् । तपसा । युजा । वि । जहि । शत्रून् ॥ अमित्र+हा । वृत्र+हा । दस्यु+हा । च । विश्वा । वसूनि । आ । भर । त्वम् । नः ॥ ३ ॥**

सर्वं तत्वा वस्त इति तव इति बलवचनम् । बलवद्वचनं च । तवसोऽपि तवीयान् बलवतोऽपि बलवत्तरः । परिपूर्णबल इत्येतत् । यत्र नोभयोः प्रयोगस्तत्र तरप्



तमबर्थे भवति । ईयसुनिष्ठनर्थे । 'पराऽस्य शक्तिः' इति च श्रुतिः । हे मन्यो नरसिंह, त्वं कौरवसेनाम्, अभि उभयतः इहि आक्रमस्व । पुरतः पृष्ठतश्च, वामतो दक्षिणतश्च । परित इत्येतत् तदुक्तं भवति । अभिमुखमेहीति वा । अभियोद्धुमेहीति वा ।

अस्मत्कृतेन तपसा युजा सहायेन । तत्तत्कर्मानुगुणं हि स विजयं पराजयं वा ददाति । न स्वच्छन्दम् । स्वीयेन वा सहजेन तेजसा शत्रून् विजित्य जहि, पातय तमसि । विविधं वा जहि यस्य यदनुगुणं तं तथा । विविधायुधैश्च विविधं जहि । गदया बाणेन शूलेन पट्टसेन प्रासेनेति । कश्चिच्छिरश्छित्वा । कश्चिदुरःपाटनेन । कश्चिदूरुभङ्गेनेति ।

ये नोऽमित्राः शत्रुपक्षगतत्वेन शत्रुस्थानीयाः कर्णादयो भीष्मादयश्च । तेषां हन्ता भव । कर्णः, यः स्वरूपतो मित्रः सन् सम्प्रत्यमित्रो बभूव । भीष्मादयश्च पूर्वं मित्वा त्रायमाणाः सन्तः सम्प्रत्यमित्रा इव योद्धुमागताः । यानि चास्मान् योद्धुमावृणते तानि वृत्राणि कौरवसैन्यानि । तानि च जहि । मुख्यतश्च दस्यून् लोकोपक्षयहेतून् शतं दुर्योधनादीन्, येभ्य एव मित्राण्यमित्रा बभूवुः, अवृत्राणि च वृत्राणि, तान् केवलं मयि सन्निधाय जहि । अथ चास्मत्पक्षीयाणां वृत्राणि अज्ञानानि, यतः युद्धेष्वधर्मतामतिः, हन्तव्येष्वहन्तव्यतामतिः, तानि च निवारय । एवं सर्वान् बाह्यानान्तरांश्च शत्रून् विहत्य विश्वानि द्यूतच्छलेन तैरपहृतानि नः अस्माकमेव वसूनि अस्माकम् आभर प्रत्याहर । भरेति हञो रूपम्, न भृञः । 'हृग्रहोर्भश्छन्दसि हस्येति वक्तव्यम्' (८.२.३५) इति हि वार्तिकम् । तेन हकारस्यायमादेशो भ इति ।

अत्र वस्तुतः प्रथमपादे तृतीये च एकादशाक्षराणि । द्वितीये दश । तुरीये च नवेति संहत्य (१०+१०+११+९=) एकचत्वारिंशदक्षराणि । तेन भुरिक् पङ्क्तिरिति वक्तव्यम् । नैवं छन्दोविद आचक्षते । त्रिष्टुभा समारम्भात् त्रिष्टुब्गणपतितत्वाच्च त्रिष्टुबेवेयमिति च ते मन्यन्ते । तत्र तावत् तुरीयचरणे

क्षैप्राक्षरव्यूहेन एकादशाक्षरत्वं सम्पाद्यम्–‘विशुवा वसूनियाभरा त्वं नः’ इति, ‘विश्वा वसूनिया भरा तुवं नः’ इति, विशुवा वसून्या भरा तुवं नः’ इति वा । तथाच केवलं द्वितीये दशाक्षरेति एकाक्षरोना निचृत् त्रिष्टुबिति वक्तुमुचितम् । अथाप्यनुक्रमणिकाकारः केवलां त्रिष्टुभं वष्टि । कथम्? प्रथमपादे पुनः स्वरव्यूहेन–‘अभि इहि मन्यो’ इति । तेन प्रथमपादस्य जागतत्वं स्यात् । त्रिष्टुभः किमायातम्? न भोः । पादद्वयमेळनेन द्वाविंशत्यक्षरत्वमायातमिति केवला त्रिष्टुबियमिति प्राचीनानां सम्प्रदायः । अथापि यदि निचृत्त्रिष्टुप्त्वं मन्येथाः, कामं मन्यस्व मानिन् । वयमपि मन्यामहे साधुरयमपि ते पन्था इति । न नूनं कुप्येत् त्रिष्टुब्देवताऽपि ॥ ३ ॥

**(सं.भा.)** अभिगच्छ शत्रून् । बलवतोऽपि बलवत्तरः । तपसा मत्कृतेन सहजेन वा त्वदीयेन परन्तपेन तेजसा । कर्णादयोऽमित्राः । आवृत्य स्थितानि सैन्यानि वृत्राणि । दुर्योधनादयो दस्यवः । तान् हत्वा विश्वानि वसून्यस्माकमाहर ॥ ३ ॥

**त्वंहिम॑न्योऽअ॒भिभू॑त्योजास्स्वय॒म्भूर्भा॑मो॑ऽअभिमाति॒षाहः ।**
**वि॒श्वच॑र्षणि॒स्सहु॑रि॒स्सहा॑वान॒स्मास्वोज॒ᳶपृत॑नासुधेहि ॥ ४ ॥**

**त्वम् । हि । म॒न्यो॒इति॑ । अ॒भिभू॑ति+ओजाः । स्व॒य॒म्+भूः । भाम॑ः । अ॒भि॒मा॒ति॒+स॒हः ॥ वि॒श्व+च॑र्षणिः । सहु॑रिः । सहा॑वान् । अ॒स्मासु॑ । ओज॑ः । पृत॑नासु । धे॒हि॒ ॥ ४ ॥**

परेषामभिभूतिकरमोजो यस्य । अत्र ओजःपदेन बलमात्रमुच्यते । नतु पराभिभवनशक्तिः । ‘ओजोऽवष्टम्भबलयोः’ इति यादवप्रकाशः । स्वयम्भूः स्वयमेवात्र मदनुग्रहायाविर्भूतः । भातीति भामः क्रोधेन प्रज्वलन् । अथवा, भ उग्रत्वे इत्याचार्यपठितो धातुपाठः । अमोऽमितः भ उग्रभावो यस्य स भामः । अथच स्त्रीसौन्दर्यं वामम् । कामिनी हि वामा भवति । पुरुषसौन्दर्यं भामम् । पौरुषगर्भं सौन्दर्यम् । स्वस्य भामप्रदत्वाच्च भामः । भीमत्वाच्च भामः । तृतीयोऽतिशये । उत्तरवत् पूर्वस्यापि भवति तृतीयता । अभिमिनते अभिगच्छन्ति,



अभिगत्य च हिंसन्तीत्यभिमातयः शत्रवः । मीञ् बन्धने हिंसायां च । अपरे ‘मा माने’ इत्यतः अभिमातीत्यभिमातिरिति निर्वदन्ति । अन्ये ‘मेङ् प्रणिदाने’ इत्यतः अभिमयत इति । अभिमातिरेव लोके अभियातिर्बभूव । ‘अभियातिररातिरमित्ररिपू’ इति ह्यभिदधति । अभिमातीनरातीन् सहते तैरनभिभाव्यः सन् स्वयं तानभिभवतीत्यर्थः । षत्वं समासजम् । संहितायां दैर्घ्यं तु सामस्त्यार्थे । सर्वानरातीनयमभिभवितेत्यर्थः ।

विश्वं वायुं जीवजातं सर्वं जगत् सर्वं च कार्यजातं चष्ट इति विश्वचर्षणिः । सर्वसाक्षी । विश्वे जीवा अस्य चर्षणयः प्रजा इति च विश्वचर्षणिरुच्यते । सर्वजीवनिकायनियामक इत्यर्थः । सहुरिः भक्तापराधसहिष्णुः । सहतेरुरिन् । ‘जसिसहोरुरिन्’ इति दशपादिका । ‘सहतेऽत्यर्थमिति सहुरिः, अक्रोधनः’ इति वृत्तिकारः । शत्रुषु भामः क्रोधनोऽपि भक्तेषु सहुरिरक्रोधन इति सुन्दरम् । अथ सहुरिरित्यग्निरुच्यते । सहुरिरित्यादित्य उच्यते । भूस्थाने सहुरिरग्निप्रतीकः । द्युस्थाने सहुरिरादित्यप्रतीकः । अग्निरिवाऽदित्य इव च शत्रुपूगं दहन् । सहावान् क्षमावान् । धर्मराजकृतं द्यूतादिकमपराधं क्षमस्वेत्यनेनाऽह । सहायवान् वा सहावान् । त्वं सेनानीः । वयं तव सहायभूताः पृतना इत्यर्थः । अस्मासु तव पृतनासु ओजः बलं पराभिभवनशक्तिं वा धेहि देहि निधापय वा । सर्वाणि चैतानि विशेषणानि भीमे च स्वरसतः सम्भवन्ति । तेन भीमस्य मुख्यं मन्युप्रतिबिम्बत्वमाह ।

अत्र प्रथमपादे ‘तुवं हि मन्यो अभिभूतियोजाः’ इति, तुरीयचरणे च ‘अस्मासुवोजः’ इति च विश्लेषेण केवला त्रिष्टुप् । ‘सहावान्’ इत्यत्र सहीयानित्याथर्वणः पाठः । अतिशयेन सहत इति सहीयानित्यर्थः ॥ ४ ॥

**(सं.भा.)** अभिभूतिकरम् ओजः यस्य । भामः क्रुध्यन् शत्रुषु । अभिमातीन् हिंसकान् शत्रून् सहते अभिभवति सर्वात्मना । विश्वं चक्षाणः पश्यन् । सहुरिः नाभिभूयते शत्रुभिरिति । सहावान् सतामपराधसहिष्णुः । अस्मासु पृतनासु च अभिभवनशक्तिं निधेहि ॥ ४ ॥

**अभागस्सन्नपपरेतोऽअस्मितवक्रत्वातविषस्यप्रचेतः ।**
**तन्त्वामन्योऽअक्रतुर्जिहीळाहंस्वातनूर्बलदेयायमेहि ॥ ५ ॥**

**अभागः । सन् । अप । परा+इतः । अस्मि । तव । क्रत्वा । तविषस्य । प्रचेत-इतिप्र+चेतः ॥ तम् । त्वा । मन्योइति । अक्रतुः । जिहीळ । अहम् । स्वा । तनूः । बल+देयाय । मा । आ । इहि ॥ ५ ॥**

‘जिहीडाहं स्वा तनूर्बलदावा न एहि’ इत्याथर्वणः पाठः ।

तविष इत्यब्धिवचनः । तविष इति द्युवचनः । तविष इति महद्वचनः । तविष इव तविषः, अब्धिरिवागाधः, अगाधमहिमेत्येतत् । यो द्यौरिवोन्नतः सर्वोत्तम इत्येतत् । यो बलेन महान् स महापुरुषस्तविषः । अथच यस्य ततं सर्वत्र ज्ञानमिच्छा च स तविषः स्वतन्त्रज्ञानेच्छ इत्येतत् । प्रकृष्टं सर्वग्राहि चेतो ज्ञानं यस्य तादृश । अथच मां प्रचेतयति ममाऽलोचने सर्वविषयं ज्ञानं प्रददातीति हे प्रचेतः, मन्यो, तविषस्य स्वतन्त्रेच्छस्य पुरुषोत्तमस्य तव क्रत्वा क्रतुना, ज्ञानमय्या इच्छया, ‘द्वादश समाः पाण्डवा वने वसन्तु, एकं च संवदज्ञात-वासम्’ इत्येवंरूपया, अभागः दाये भागरहितः सन्, दुर्योधनेनापकृतः, अप-हसितः, सर्वं सोढ्वा राज्याद् परेतः दूरं वनं गतोऽस्मि, अज्ञातवासाय दूरं मत्स्यदेशं गतोऽस्मि । सर्वमिदं त्वदिच्छयैवाकरवम् । नतु दुर्योधनाज्ञया, नवा धर्मराजेच्छयेत्यर्थः । अथच तव क्रत्वा, सप्तम्यर्थे तृतीया, क्रतौ दुर्जनसंहाराख्ये कर्मणि त्रयोदशसमाः भागमनूढ्वा वनेऽवसम् । मत्स्यदेशेऽवसम् । सोऽयं विलम्बोऽपि त्वदिच्छयैव किल । अत एव द्यूतसभायां तान् नावधिषम् । सम्प्रति सन्निहितः सोऽनेहेत्याह– तं त्वा । अकारवाच्यस्य तव क्रतुः निश्चय एव क्रतुर्यस्य सोऽहम् । ‘कामेन मे काम आगाद्धृदयाद्धृदयं मृत्योः’ इति हि श्रुतिः । अथच अकारवाच्यस्य क्रतुः पूजारूपं कर्म यस्य तादृशोऽहम् । वनेऽपि, अज्ञातवा-सेऽपि त्वां निरन्तरं पूजयन् त्वदिच्छानुगुणं वर्तमानोऽहम् । तं त्वां जिहीळ जिहीड जिहेड । णिज्गर्भोऽयं हेडतिः । हेडयामास अस्मच्छत्रुषु सद्यः संहारा-



नुकूलक्रोधवन्तं चकर । अथच त्रयोदश समाः अक्रतुः शत्रुसंहाराख्यकर्म-रहितः तूष्णीमतिष्ठम्, त्वदिच्छयैव । अथ तेन तूष्णीम्भावेनैव त्वामहं जिहेड क्रोधयामास । ‘हेडृ अनादरे’ इति हि पठन्ति । आदर इति प्रीतिरुच्यते । तेनानादर इति क्रोधोऽपि भवति । अहं तव स्वा तनूः । मुख्यप्रतिमा, साक्षात् प्रतिबिम्बम् । ‘वायौ मुख्यधिया’ इति स्मरणात् । तस्मात् कौरवकुल-कालनानुकूलबलाधानाय मामेहीति । मां द्वारीकृत्य पाण्डवपृतनाया बल-दानाय वा । अत एव ‘बलदावा न एहि’ इत्याथर्वणः पाठः । बलदाता सन्नस्मानेहीति ।

मन्त्रेऽस्मिन्नुत्तरार्धे द्वेधा पादविभागः सम्भवी–

‘तं त्वा मन्यो अक्रतुर्जिहीळा–। हं स्वा तनूर्बलदेयाय मेहि’ इत्येकः । ‘तं त्वा मन्यो अक्रतुर्जिहीळाहम् । स्वा तनूर्बलदेयाय मेहि’ इत्यपरः । प्रथमपक्षे तृतीय-चरणे ‘तं तुवा मन्यो’ इति विश्लेषेणाक्षरपूर्तिः । अयं साम्प्रदायिकः पक्षः । द्वितीयपक्षे तुरीयचरणे, ‘सुवा तनूः’ इति विश्लेषेण ॥ ५ ॥

**(सं.भा.)** तव क्रत्वा कर्मणा भूभारहरणरूपेण अभागः सन् वनं प्रति परा-गतः । क्रत्वा ज्ञानरूपया इच्छया अभागः अनधिगतदायभागो वा । तविषस्य महत्तमस्य तव । प्रचेतः प्रकृष्टचेतन सर्वज्ञ । तं त्वामेतावन्तं कालमक्रतुः दुष्टनिग्रहविषये निष्क्रियः जिहीळ जिहीड दूरीचकारेव । अहं तव स्वा तनूः मुख्या प्रतिमा, प्रधानाङ्गम् । एहि मां बलदानाय ॥ ५ ॥

**अयन्तेऽअस्म्युपमेह्यर्वाङ्प्रतीचीनस्सहुरेविश्वधायः ।**
**मन्योवज्रिन्नभिमामाववृत्स्वहनावदस्यूँरुतबोध्यापेः ॥ ६ ॥**

**अयम् । ते । अस्मि । उप । मा । आ । इहि । अर्वाङ् । प्रतीचीनः । सहुरे । विश्व+धायः ॥ मन्योइति । वज्रिन् । अभि । माम् । आ । ववृत्स्व । हनाव । दस्यून् । उत । बोधि । आपेः ॥ ६ ॥**

'अयं ते अस्म्युप न एह्यर्वाङ् प्रतीचीनः सहुरे विश्वदावन् । मन्यो वज्रिन्नभि न आ ववृत्स्व–' इत्याथर्वणः पाठः ।

अयमहं ते तवास्मि दासः । तव प्रियतमः प्रथमप्रतिमा च । मामुप एहि अर्वाङ् पुरतः । मदग्रगो भव । प्रतीचीनः पृष्ठगतश्च मामेहि । न केवलम्, अभितः उभयतः, वामदक्षिणपार्श्वयोश्च मामाववृत्स्व आवृणीष्व, रक्ष तनुत्रमिव परितो भवन् । त्रिभिर्विशेषणैस्तमभिष्टौति–सहुरे विश्वधायो वज्रिन्निति । सहुरि-रस्मदीयानामपराधसहिष्णुरित्युक्तम् । शरणागतवत्सलो ननु भवानिति पुन-राम्रेडयति । विश्वं वायुं जीवजातं जगद् वा दधाति धारयति पालयति चेति विश्वधायाः । विश्वं धयति संहरतीति च विश्वधायाः । आथर्वणपाठे– 'यतः सहुरिः भक्तवत्सलः अतो विश्वदावा । भक्तापेक्षितं सर्वं ददातीति विश्व-दावा' इति व्याख्येयम् । वज्रिणि इन्द्रे स्थित्वा देवानां विजयप्रद । तदवतारेऽर्जुने च । वजं ज्ञानं रं रमणं चास्यास्तीति वज्री । स्वयं सर्वं जानन् पाण्डवेषु रमते । एवम्भूत हे मन्यो नरसिंह, आवां सहैव दस्यून् कौरवान् हनाव । आपान्त्येनमित्यापिर्बन्धुरुच्यते । एतमर्थं आपेर्बन्धुजनस्य धर्मराजादेरपि बोधि बोधय– दस्युहनने नासहायो भीमसेनः, तेन सह सदा नरसिंहो भवतीति । अथच सङ्ग्राममधर्मं शङ्कमानम्, कर्तव्ये सन्दिहानम्, अनेन सङ्ग्रामकर्मणा महत् पापमापतति मयीति बिभ्यतं धर्मराजं बोधय नायमधर्म इति, न ते पापमिति । अन्तः स्थित्वा तं प्रेरयेत्यर्थः ।

'अयं ते अस्म्यियुप मेहियर्वाङ्' इति, 'बोधियापेः' इति च क्षैप्रविश्लेषेण केवला त्रिष्टुप् । आथर्वणपाठे प्रथमचरणे 'एहियर्वाङ्' इति विश्लेषेण ॥ ६ ॥

**(सं.भा.)** प्रतीचीनः शत्रून् प्रतिगन्ता । अर्वाङ् आभिमुख्येन मामेहि । अर्वाङ् पुरस्तादेहि । प्रतीचीनः पृष्ठगतश्च भवेति वा । विश्वधारक । वज गतौ । वजनाद् रमणाच्च वज्री । ज्ञानानन्दमय । न केवलमग्रतः पृष्ठतश्च । मामभितो वर्तस्व । आपेः बन्धुजनस्य धर्मजादेरपि बोधि बोधय दुष्टनिग्रहस्याऽवश्यकताम् ॥ ६ ॥



**अभिप्रेहिदक्षिणतोभवामेधावृत्राणिजङ्घनावभूरिं ।**
**जुहोमितेधरुणम्मध्वोऽअग्रमुभाऽउपांशुप्रथमापिबाव ॥ ७ ॥**

**अभि । प्र । इहि । दक्षिणतः । भव । मे । अध । वृत्राणि । जङ्घनाव । भूरि ॥**
**जुहोमि । ते । धरुणम् । मध्वः । अग्रम् । उभौ । उप+अंशु । प्रथमा ।**
**पिबाव ॥ ७ ॥**

**॥ इति प्रथमं सूक्तम् ॥**

'भवा नोऽधा' इत्याथर्वणः पाठः ।

हे मन्यो, प्रधनमभिगच्छ । मम दक्षिणतो भव । दीर्घेण सदा भवसीत्याह । अथापि स्वकीयकर्तव्यतया निवेद्यसे । 'अधा' इति पुनरवधारणे । अनन्तरमेव, विना विलम्बम्, वृत्राणि शत्रून् भूरि प्रभूतं जङ्घनाव जङ्घन्यावहै क्रियासमभि-हारेण हनाव । ध्रियत इति धरुणः । तं करपुटधृतं मध्वः मधुरस्य सोमस्येवाग्रं श्रेष्ठं रसम् । धरुण इति वा रसवचनम् । अग्रं धरुणं श्रेष्ठं रसम्, दुःशासनवक्षस उत्सिक्तं रुधिरं ते जुहोमि । 'सोमं तस्मै चाऽर्पयच्छोणिताख्यम्' इति ह्याचा-र्यवचनम् । एतद् बाह्यदर्शनम् । अन्तरङ्गमाह– उपांशु रहः, अस्मिन् युद्धे दुष्ट-दमनेन जातं शुभं फलं लोककल्याणरूपम् आवामुभावेव प्रथमौ सन्तौ पिबाव । अस्मिन् युद्धे समग्रशत्रुहन्ता तत्रतत्र स्थितो नरसिंह एव । नान्यः कोऽपि । द्वितीयस्तु सर्वजीवमान्यहमित्याह भीमः । शत्रुसंहारे प्रधानाङ्गं हि मारुतिः ।

अथच मध्वो भविष्यन् अग्रं श्रेष्ठं तव धरुणं गुणगणधारकं वेदवाङ्मयं त्वयि जुहोमि त्वत्परतया होष्यामि प्रतिपादयिष्यामीति । वैयाकरणा आहुः–'धारे-र्णिलुक् च' इति । धारयतेरुनन् प्रत्ययो भवति, स णिलुक् च भवतीति । धारयति भगवन्तमिति धरुणो वैनतेय इति चाऽचक्षते । अत्र तु गरुडेनाभिमन्यमानानि छन्दांस्युच्यन्ते । 'छन्दोमयेन गरुडेन समुह्यमानः' इति च भागवते । साक्षाच्चेदं

निर्वचनं भवति । धरति भगवद्गुणगणं प्रतिपादकतयेति धरुणो वेदः । धारयन्त्येनं विप्रा इति च । एवं वेदार्थसारं आवामुभावेव उपांशु रहस्यन्तर्मनसि प्रथमौ सन्तौ पिबाव । वेदार्थाविष्करणरूपं हवनं किञ्चिदेव । अनन्तार्थचिन्तनं त्वन्तरङ्ग इति । प्रथमं तावत् सर्ववेदार्थवेत्ता भगवानेव– 'वेदान्तकृत् वेदविदेव चाहम्' इति स्ववचनात् । 'वेदान्तकृदपि नाहं वेदकृत् । अपौरुषेयत्वाद् वेदानाम्, किन्तु वेदविदेव' इति, 'अहमेव च वेदवित्' इति चार्थः । 'अहमेव मुख्यतः वेदवित् । अनन्तरं वायुश्च' इति चकरार्थः । 'इत्यस्या हृदयं साक्षान्नान्यो मद् वेद कश्चन' इति च भागवते । मत्तोऽन्यः कोऽपि न वेद । यदि वेद स मत्तोऽनन्यः कश्चन कोऽपीति । अनन्यः मदेकतानः । 'अनन्याश्चिन्तयन्तो माम्' इतिवत् । स च कः? को ब्रह्मा वायुर्वा– इति भागवतवचनार्थः । अतः साधूक्तम् प्रथमा पिबावेति । त्वं प्रथमः पाता, अहं द्वितीय इति । तदेतद् वायुध्यानेऽपि स्फुटम्–'उद्यद्रविप्रकरसन्निभमच्युताङ्के स्वासीनमस्य नुतिनित्यवचःप्रवृत्तिम्' । अच्युताङ्के स्वासीनमित्यनेन 'उपांशु'पदं विवृतम् । उपह्वरे भगवद्गुणानामंशवः स्फुरणाख्यकिरणाः यत्र तदुपांशु । उपह्वरे अंशवः विभज्य गुणचिन्तनानि सहचिन्तनानि वा यत्रेति वा । 'अंश विभाजने' इत्येके पठन्ति । 'अंश सहभावे' इत्यन्ये । अत्र पूर्वार्धे–'भवा मे+अधा वृत्राणि' इति पादयोर्विश्लेषेणाक्षरपूर्तिः ॥ ७ ॥

**(सं.भा.)** आवृत्य स्थितानि परसैन्यानि निःशेषं हनाव । करे ध्रियमाणं मधुनः सोमस्य रसमिव दुःशासनस्योरस उत्सिक्तं रुधिरमस्मिन् रणयज्ञे ते जुहोमि । उभावावाम् उपांशु पिबाव । यथा नूनं पपिवेति जनाः सम्भ्राम्येरन् । अथ च मध्वो भविष्यन् । तव गुणधारकमत एवाग्रं मुख्यं वेदार्थं स्वयं जुहोमि आस्वदे । उपदिशामि च सताम् । एवमपूर्वं छन्दसां योगमावामुभावुपांशु प्रथमा प्रथमौ सन्तौ पिबाव ॥ ७ ॥

—०—



## अथ द्वितीयं सूक्तम्

**त्वयामन्योसरथमारुजन्तोहर्षमाणासोधृषितामरुत्वः ।**
**तिग्मेषवऽआयुधासंशिशानाऽअभिप्रयन्तुनरोऽअग्निरूपाः ॥ १ ॥**

**त्वया । मन्योइति । स+रथम् । आ+रुजन्तः । हर्षमाणासः । धृषिताः । मरुत्वः ॥ तिग्म+इषवः । आयुधा । सम्+शिशानाः । अभि । प्र । यन्तु । नरः । अग्नि+रूपाः ॥ १ ॥**

'हर्षमाणा हृषितासो मरुत्वन्' इत्याथर्वणे पाठः । परेषां हर्षं जनयन्तः स्वयं च हृष्टा इति तदर्थः । सायणस्तु 'रुषितासो मरुत्वन्' इति पाठं पपाठ । 'रुषिताः सञ्जातरोषाः' इति च व्याचख्यौ ।

हे मन्यो, हे मरुत्वः, देवानां पते, मरुतां पते, विशिष्य मरुतो मुख्यवायोः पते, तेन ममान्तरङ्गस्वामिन् । मरुतः सन्त्यस्य, मरुद्वाऽस्त्यस्य अङ्गत्वेनेति मरुत्वान् । 'मतुवसो रु सम्बुद्धौ छन्दसि' (अ.सू.८.३.१) इति रुः । समानं रथं शरीराख्यम्, आ+रुजन्तः आरुह्य गच्छन्तः । 'रुजो भङ्गे' इति पठन्ति । गतौ चेति पठनीयम् । 'शरीरं रथमेव च' इति काठके । अथवा समानं रथमा आरुह्य रुजन्तो रोजयन्तः शत्रून् पीडयन्तः । रुज हिंसायाम् । हर्षमाणासः शत्रुपरिभवमास्वाद्य हृष्यन्तः । स्वपक्षीयाणां हर्षं निर्मिमाणा वा । 'आज्जसेरसुक्' (अ.सू.७.१.५०) इति जसेरसुगागमः । धृषिताः स्वयमनभिभूताः शत्रूनभिभवन्तः । धृष प्रसहने । अथवा धृषिताः धृष्टाः शत्रुदमने प्रगल्भाः प्रकटप्रभावाः । ञि धृषा प्रागल्भ्ये । तिग्मेषव इत्युपलक्षणम् । तीक्ष्णायुधाः । तदेव स्फुटमाह– आयुधानि संशिशानाः सम्यक् निशितयन्तः । शो तनूकरणे । तीक्ष्णीकरणमेव तनूकरणम् । 'ಮಸೆ', 'ಚೂಪುಗೊಳಿಸು' इति भाषायाम् । अन्तःसम्भृतेन पौरुषेण शत्रूणामग्निरूपाः अग्निवत् सन्तापकाः । 'सन्नद्धाः कवचिनः' इति यास्कः । नरः पाण्डवसैनिकाः कौरवसेनामभि प्रधनाय यन्तु । अभि-

भवन्तो वा प्रधने यन्तु । अस्मत्सैनिकशरीरेषु सर्वत्र त्वमेव सन्निधाय शत्रून् दहेत्यर्थः । तदुक्तम्–‘दहदह नरसिंहासह्यवीर्याहितं मे’ इति ॥ १ ॥

**(सं.भा.)** त्वया समानं रथमारुह्य गच्छन्तः । मरुत्वः देवानां पते । आयुधानि निशितयन्तः । अग्निरूपा निर्दहन्तः शत्रून् ॥ १ ॥

**अ॒ग्निरि॑वमन्योत्विषि॒तस्स॑हस्वसेना॒नीर्न॑स्सहुरेहू॒तऽए॑धि ।**
**ह॒त्वाय॒शत्रू॒न्विभ॑जस्व॒वेद॒ऽओजो॒मिमा॑नो॒विमृधो॑नुदस्व ॥ २ ॥**

**अ॒ग्निः+इ॑व । म॒न्यो॒इति॑ । त्वि॒षि॒तः । स॒ह॒स्व॒ । से॒ना॒+नीः । न॒ः । स॒हु॒रे॒ । हू॒तः । ए॒धि॒ ॥ ह॒त्वाय॑ । शत्रू॑न् । वि । भ॒ज॒स्व॒ । वेद॑ः । ओज॑ः । मिमा॑नः । वि । मृध॑ः । नु॒द॒स्व॒ ॥ २ ॥**

हे मन्यो, हे सहुरे, अस्मासु क्षमाशील, शत्रुभिरपराजित, त्वम् अग्निरिव त्विषितो दीप्यमानः, शत्रूणां तापकः । त्विष दीप्तौ । परसेनां सहस्व अविजितः सन् विजयस्व । साहय वा । स्वसन्निधानेनानभिभाव्यताधानमेव हि भगवतः सहनं नाम । तेन सर्वत्र णिलुक् । स्मरन्ति हि–‘स्वातन्त्र्यास्नेहयोरन्तर्णी-तणिच्’ इति । ‘स्वतन्त्रे कर्तृशब्दः स्यात्’ इति च । अत्र तूभयमपि लुगर्थः, भगवतः स्वातन्त्र्यं भीमे स्नेहातिशयश्चेति । मां च मदभिरक्षितं बलं चापराजितं कुर्वित्यर्थः । दुर्योधनः पूर्वमेवेदं जग्नौ । तेनोज्जगार–‘पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम्’ इति । सङ्ख्यया पर्याप्तमपि अस्मान् जेतुं पर्याप्तं समर्थमि-त्यर्थः । यतस्त्वं नः सेनाप्रणेता । यतोऽस्मत्सेनान्यामग्निरूपे धृष्टद्युम्ने स्थित्वा तत्प्रवर्तकस्त्वमेव । अत एवाग्निरिवेत्युपचक्रमे । अतः हूतः तव भक्तैरस्माभिः विजयं देहीति हूतः आहूय प्रार्थितः अस्मान् एधि एधय शक्त्याधानेन । अथवा मया आहूतस्त्वं नः अस्माकं मम वा सेनाया नेता एधि भव । अस्तेर्लोटि मध्यमपुरुषैकवचने रूपम्–एधि स्तादिति । भूत्वा च सेनानीः शत्रून्, ये त्वां त्वद्भक्तांश्च द्विषन्ति, ये च तदनुबन्धिनः, तान् हत्वाय निःशेषं निगृह्य । अतिशयार्थे हत्वेत्यस्य यगागमः–‘क्त्वो यक्’ (अ.सू.७.१.४७) इति ।



अस्माभिः घातयित्वा वा । सम्प्रति शत्रुभिरपहृतमस्माकं वेदः पैतृकं धनं वि भजस्व । शत्रुभिर्वियोज्य अस्मासु भाजय सङ्क्रामय । अस्मासु ओजः परा-भिभवशक्तिं, सामान्यतो बलं वा निर्मिमाणः । केषाञ्चित् कुर्वन् । केषाञ्चिद् व्यक्तं कुर्वन् । ये मर्धन्ति हिंसन्ति ते मृधः शत्रवस्तान् । विनुदस्व सतः पथो वियोज्य अधः पाताय नोदयेति । शत्रून् विमृद्य अस्मान् विनोदयेति च । ‘मृधु उन्दे’ इति पठन्ति पाणिनीयाः । ‘मृधु रुन्धे’ इति काशकृत्स्नीयः पाठः साधीयान् । अत्र प्रथमपादो द्वादशाक्षर इति भुरिगियं त्रिष्टुप् । कात्यायनः केवलं त्रिष्टुबित्याह । आथर्वणिकाः स्फुटं भुरिक् त्रिष्टुबित्याचक्षते ॥ २ ॥

**(सं.भा.)** त्विषितः दीप्तः । अस्माभिराहूतः नः सेनानीर्भव । शत्रून् हत्वा वेदः द्रविणं नः प्रापय । अस्मासु ओजो निर्मिमाणः मृधः शत्रून् नाशय ॥ २ ॥

**स॒ह॑स्वमन्योऽअ॒भिमा॑तिम॒स्मेरु॒जन्मृ॒णन्प्र॑मृ॒णन्प्रेहि॒शत्रू॑न् ।**
**उ॒ग्रन्ते॒पाजौ॑न॒न्वारु॑रुध्रेव॒शीवशं॑न्नयसऽएकज॒त्वम् ॥ ३ ॥**

**सह॑स्व । म॒न्यो॒इति॑ । अ॒भि+मा॑तिम् । अ॒स्मेइति॑ । रु॒जन् । मृ॒णन् । प्र॒+मृ॒णन् । प्र । इ॒हि॒ । शत्रू॑न् ॥ उ॒ग्रम् । ते॒ । पाज॑ः । न॒नु । आ । रु॒रु॒ध्रे॒ । व॒शी । वश॑म् । न॒य॒से॒ । ए॒क॒+ज॒ । त्वम् ॥ ३ ॥**

‘अभिमातिमस्मै’ इति, ‘नन्वा ररुध्रे वशी वशं नयासा एकज त्वम्’ इति चाऽथर्वणः पाठः । सायणस्तु ‘रुरुध्रे’ इत्येव पाठं पठति ।

हे मन्यो, अस्मे अस्माकम्, अस्मदः षष्ठ्यर्थे शे । ‘सुपां सुलुक्पूर्वसवर्णा-च्छे–’ (अ.सू.७.१.३९) इति । मम वा, अभिमातिं शत्रुम्, मुख्यतः दुःशासनम् । तद्वधप्रसङ्ग एव मन्त्रदर्शनात् । सहस्व साहय अस्माभिरभि-भावय । तथाऽन्यानपि शत्रून् रुजन् । रुजो भङ्गे । रोजयन् रुग्णवतः भग्नाव-यवान् कुर्वन् । मृणन्, मृण हिंसायाम्, विविधायुधैः हिंसन् हिंसयन् वा । प्रमृणन् मारयन् प्रेहि अभिगच्छ । पातीति पाजो बलमिति नैरुक्ताः । ‘पातेर्बले

जुट् च' (९.६३) इति दशपादिका। 'पातेर्धातोरसुन् प्रत्ययो भवति बलेऽभिधेये जुट् चाऽगमः' इति वृत्तिकारः। हे मन्यो उग्रं ते पाजो बलं ननु। अथापि मौर्ख्यादज्ञानाच्च कौरवास्तत् आ रुरुध्रे आरुरुधिरे। योद्धुमावृत्य स्थिताः। विरुरुधुरिति यावत्। रुधिर् आवरणे। अथ च ते तवेदं पाण्डवबलमुग्रं विपक्षक्षपणदक्षम्। अथाप्यारुरुधिरे वयमेव विजेष्यामह इति भ्रान्ताः। अथ च आ इत्यन्वर्थे। तथाच आरुरुध्रे अनुरुरुधिरे प्रीत्याऽनुसृतवन्तस्ते बलमस्मत्सैनिका इति। 'इरयो रे' (अ.सू.६.४.७६) इति 'इरे' इत्यस्य रेभावः। सर्वं वशयति स्वेच्छाधीनं करोतीति वशी स्वतन्त्रः। कौरवा यत् त्वामारुरुधुस्तदपि त्वदिच्छयैवेत्यर्थः। 'बालः क्रीडनकैर्यद्वत् क्रीडतेऽस्माभिरच्युतः' इति हि स्मरन्ति। तस्य तव किमस्मत्सहायेनापि कृत्यम्? एक एव जायते जयति चेत्येकजोऽसहायशूरः। तस्मात् त्वमेक एव सर्वं वशं नयसे शत्रुपूगम्।

आथर्वणपाठे–अस्मै मह्यं द्रुह्यन्तमभिमातिमित्यर्थः। ररुध्र इति वर्णव्यत्ययेन रुरुध्र इत्येवार्थः। नयासै नयसे। अन्यत् समानम्। बाह्वृच्यः पाठो भीमदृष्टः। ते एव सूक्ते किञ्चित् पाठभेदेन ब्रह्मास्कन्दोऽपि ददर्श। अत्र तृतीयचरणे 'ननुवारुरुध्रे' इति विश्लेषेण केवला त्रिष्टुप्॥ ३॥

**(सं.भा.)** अभिमातिं द्रौपदीकेशाकर्षणादिनाऽभितो हिंसकं दुःशासनं तत्प्रतीकारेण अभिभव। रुजन् विजयाशां भञ्जन्। मृणन् उरऊर्वादिकं मृद्नन्। प्रमृणन् जीविताशामेव मृद्नन्। उग्रं ते बलम्। अथाप्यारुन्धन्ति। सर्वस्य वशी। एकजोऽसहायशूरः॥ ३॥

**एको॑ बहू॒नाम॑सि मन्यवीळि॒तो विशं॑विशं यु॒धये॒ सं शि॑शाधि।**
**अकृ॑त्तरु॒क्त्वया॑ यु॒जा व॒यं द्यु॒मन्तं॒ घोषं॑ विज॒याय॑ कृण्महे ॥ ४॥**

**एकः॑। ब॒हू॒नाम्। अ॒सि॒। म॒न्यो॒ इति॑। ई॒ळि॒तः। विश॑म्+विशम्। यु॒धये॑। सम्। शि॒शा॒धि॒॥ अकृ॑त्त+रुक्। त्वया॑। यु॒जा। व॒यम्। द्यु॒+मन्त॑म्। घोष॑म्। वि॒+ज॒याय॑। कृ॒ण्म॒हे॒॥ ४॥**



'मन्य ईडिता विशंविशं युद्धाय सं शिशाधि' इति, 'विजयाय कृण्मसि' इति चाऽथर्वणः पाठः। सायणस्तु 'ईडितः' इत्येव पपाठ।

त्वमेक एव बहूनामसि समर्थः कामितदानाय संहाराय च। 'एको बहूनां यो विदधाति कामान्' इत्यादिभिर्मन्त्रवर्णैर्मुनिभिरीडितः। 'ईडिता' इत्याथर्वणपाठे–'एष एव करोतीति एकः सर्वकर्ता, अत एव सर्वेड्यः सन्नपि हे मन्यो, त्वमवतारेषु लीलया वयोज्येष्ठान् दशरथवसुदेवादीन् ईडिता स्तोता वन्दिता च भवसि' इत्यर्थः। स त्वं सम्प्रति कौरवैः सह कदनेऽस्मिन् अस्मत्सेनायां विशंविशं एकैकमपि सैनिकं युद्धाय सं शिशाधि तीक्ष्णीकुरु। अकृत्तरुक्। कृत्तं छिन्नम्। कृती च्छेदने। हे अविच्छिन्नानन्तकान्ते मन्यो, त्वया सहायेन वयं समेधितवीर्याः विजयाय शत्रुविजयनिमित्तं द्युमन्तं तव स्तुतियुक्तम्, दिवु स्तुतौ, घोषं सिंहनादं कृण्महे कुर्महे। 'कृण्मसि' इति पाठे कुर्म इत्यर्थः।

अत्र तृतीयपादे 'अकृत्तरुक् तुवया' इति विश्लेषेणैकादशाक्षरत्वम्। द्वितीयश्चैकादशाक्षरः। अथापि जगत्या सम्पुटीकरणाद् विराड् जगती छन्दः। आथर्वणिकानां पक्षे भुरिक् त्रिष्टुप्॥ ४॥

**(सं.भा.)** एकः प्रभवसि बहूनाम्। जनञ्जनं युद्धाय तीक्ष्णीकुरु। हे अकृत्तरुक् अक्षततेजः। द्युमन्तं आमोदवन्तं सिंहनादम्॥ ४॥

**वि॒जे॒ष॒कृदिन्द्र॑ इवानवब्र॒वो॒३॑ऽस्माकं॑ मन्यो अधि॒पा भ॑वे॒ह।**
**प्रि॒यं ते॒ नाम॑ सहुरे गृणीमसि वि॒द्मा तमुत्सं॒ यत॑ आब॒भूथ॑ ॥ ५॥**

**वि॒जे॒ष॒+कृत्। इन्द्रः॑+इव। अ॒न॒व॒+ब्र॒वः। अ॒स्माक॑म्। म॒न्यो॒ इति॑। अ॒धि॒+पाः। भ॒व॒। इ॒ह॥ प्रि॒यम्। ते॒। नाम॑। स॒हु॒रे॒। गृ॒णी॒म॒सि॒। वि॒द्म। तम्। उत्स॑म्। यतः॑। आ॒+ब॒भूथ॑॥ ५॥**

देवानां विजयसम्पादक इन्द्रइव पाकशासनइव। इन्द्र इति वायुरपि। सोऽपि देवानां विजयकृत्, इन्द्रेऽपि स्थित्वा। तद्वत् त्वमस्माकं विजयकृद् भव। अथच 'इन्द्रे इव' इति प्रतृण्णम्। इन्द्रावतारेऽर्जुने यथा, प्राणावतारे मयि यथा तथा

सर्वेष्वस्मत्सेनानायकेषु स्थित्वा हे मन्योऽस्माकं विजयदो भव । कीदृशो मन्युः? अनवब्रवः । 'अनवब्रवोऽनवक्षिप्तवचनः' इति यास्कः । अप्रतिहताज्ञ इत्येतत् । यस्य ब्रवः आज्ञारूपं वचनं न क्वापि केनाप्यवक्षिप्तमिति । को नाम तद्वचनमाक्षेप्तुमीष्टे? स त्वं मन्योऽस्माकमिह कौरवपाण्डवीयेऽधिकः पालको भव । यद्यपि बहवः पातारः सन्ति– अहमर्जुनो धृष्टद्युम्न इति । त्वं त्वेतेषामप्यधिपा भव । अध्यक्षः पालकानामित्यधिपाः । प्रियं ते नाम मन्यो इति सहुरे गृणीमः । ते नाम तव स्तुतिरूपं मन्युसूक्तं वा गृणीमः व्याहरामः । सूक्तेन त्वां स्तुम इत्यर्थः । गृणीम इति मसः सान्तस्य इकारागमो मसीति । 'इदन्तो मसि' (अ.सू.७.१.४६) । वयं विद्म, जानाम्यहं तं त्वामुत्समुत्सुकमस्मद्रक्षणे । उत्स इत्युत्सुक उच्यते । 'विष्णोः पदे परमे मध्व उत्सः' इति प्रयोगात् । 'उत्क उन्मनाः' (अ.सू.५.२.८०) इति पठन्ति । 'उत्स उन्मनाः' इति च पठनीयम् । यतः यस्मादेव कारणादस्मद्रक्षणरूपात् मत्पुर इहाऽविर्बभूविथ ।

द्वितीयचरणे 'अनवब्रवो+अस्माकम्' इति विश्लेषेणैकादशाक्षरता । तुरीयचरणश्चैकादशाक्षर इतीयमपि विराड् जगती । 'अधिपा भव+इह' इति विश्लेषे निचृज्जगती । विद्मा तमुत्+सम्' इति च विश्लेषे केवला जगती ॥ ५ ॥

**(सं.भा.)** देवानामिन्द्रइव विजयकृत् । अवममपकृष्टं न ब्रवीतीत्यनवब्रवः । प्रियं नाम स्तुमः । येन स्तवेन नः पुर आविर्भवसि । तं त्वामस्मदुद्धरणसमुत्सुकं विद्म ॥ ५ ॥

**आभू॑त्यासह॒जाव॑ज्रसायक॒सहो॑बिभर्ष्यभिभूत॒ऽउत्त॑रम् ।**
**क्रत्वा॑नोमन्योस॒हमे॒द्ये॑धिमहा॒धनस्य॑पुरुहूतस॒ंसृजि॑ ॥ ६ ॥**

**आ+भू॑त्या । स॒ह॒+जाः । व॒ज्र॒ । सा॒य॒क॒ । सहः॑ । बि॒भ॒र्षि॒ । अ॒भि॒+भू॒ते॒ । उत्+त॑रम् ॥ क्रत्वा॑ । नः॒ । म॒न्यो॒इति॑ । स॒ह । मे॒दी । ए॒धि॒ । म॒हा॒+ध॒नस्य॑ । पु॒रु॒+हू॒त॒ । स॒म्+सृजि॑ ॥ ६ ॥**



'बिभर्षि सहभूत उत्तरम्' इत्याथर्वणः पाठः ।

आ भूतिरभिभूतिः तया सहजयाऽभिभवनशक्त्या सहैव जात आविर्भूतः । अथच भूतिरुन्नतिः सर्वेश्वरत्वम् । आ समन्तात् परिपूर्णया भूत्या सहाऽविर्भूतः । 'अस्य महतो भूतस्य' इति श्रुतिः । 'एको विष्णुर्महद् भूतम्' इति च स्मृतिः । आभूतिमान् महाभूतिमान् महाभूत इति । अथच भूतिर्लक्ष्मीः । आश्लिष्टया लक्ष्म्या सहैवाविर्बभूविथेत्याह लक्ष्मीनरसिंहं पश्यन् भीमसेनः । प्रियं ते नाम गृणीम इति पूर्वमन्त्रोक्तैः तस्य प्रियनामभिस्तमिह गृणन् स्तौति– वज्र, सायक, अभिभूते, मन्यो, पुरुहूतेति । अभक्तानां 'महद् भयं वज्रमुद्यतम्' । दैत्यानां भयङ्कर । भक्तानां ज्ञानानन्ददानेनाभयङ्कर । वं बलमस्मासु जनयन् रमसे रमयसि च । सायक दुष्टानामन्तक । नः पुनर्ज्ञानानन्दसाहित्यद । आयेन लाभेन सहितांश्च नः करोषि । सारत्वात् सः । शुभावहत्वादयः । आनन्दत्वात् कर्तृत्वाच्च कः । अभिभूतिः शत्रूणामभिभविता । नः अभितः भूतिश्च भव । आश्लिष्टभूतिरित्युक्तम् । तदेव विव्रियते– अभिभूते । अभितः उभयपार्श्वयोः अङ्कं श्रिता श्रीभूरूपा भूतिर्यस्य तादृश । 'लक्ष्मीधराभ्यामाश्लिष्टः' इति हि स्मरन्ति । आथर्वणपाठे 'भूत्या सहितः सहभूतिः' इत्यर्थः । मन्युर्दुष्टानां क्रोधरूपः । ज्ञानिनां ज्ञानरूपः । ध्यानकाले सतां मनो याति च । सर्वं मन्यते सर्वज्ञः । मं मतिं नयति । मं मृतिं च नयति । 'मानं ज्ञानं लयश्चैव' इति ह्यभिदधति । मन्यते दीप्यत इति च मन्युः । मन्यतिर्दीप्तिकर्मेति हि यास्कः । पुरुहूत इन्द्रान्तर्यामी । पुरुभिर्यज्ञैर्हुतः । पुरुभिर्ज्ञानिभिराहूतः । पुरुरिति हुतश्चाऽहूतश्च । न केवलमेभिः पञ्चभिर्नामभिः । किन्तु पुरुभिः सर्वैरपि नामभिराहूतः स्तुतः । पुरुभिर्वेदैः स्तुतः । अथ किमिह पञ्चानामेव ग्रहणम्? विशिष्य पञ्चरूपस्य स्तवनार्थम् । तथाहि दोषवर्जितैर्मुक्तैरुपास्यो वज्रो नारायणः । संसारमवसाय मोक्षानन्ददो वासुदेवः सायकः । संसारभयमभिभावयन् सङ्कर्षणोऽभिभूतिः । द्युम्नमिति ज्ञानम् । तेन मन्यते प्रकृष्टद्युम्नो भवतीति मन्युः प्रद्युम्नः । रक्षार्थं पुरुभिर्हूयत इति पुरुहूतोऽनिरुद्धः । एवं सर्वशब्दवाच्यं पञ्चात्मानं

भगवन्तं प्रकृतसङ्गतत्वेन वर्णयति– हे मन्यो त्वमुत्तरं सहो बिभर्षि। उत्तरमिति लोकोत्तरम्, सर्वोत्तमम्। तमबर्थे तरप्। सहः सहजं बलम्। अपराजितत्वं वा। तेन सर्वजेतृत्वमर्थाल्लब्धम्। सर्वजेतृत्वसमानाधिकरणमपराजितत्वमित्येतत्। अस्य महाधनस्य युद्धस्य संसृजि कौरवसेनया सह अस्मत्सेनायाः संसर्गरूपे सम्मर्दे क्रत्वा शत्रुमथनकर्मणा सह, अस्माकं सहकुर्वन्, सदाऽस्मद्विषये मेदी स्निह्यन् एधि भव। ञि मिदा स्नेहने। मेद्यतीति मेदी मेदिता। अथ च मेदी अस्मासु प्रीतियुक्तः सन् नः अस्मान् पश्चापि भ्रातॄन्, सह क्रत्वा ज्ञानेन एधि समेधय।

अत्र प्रथमचरणे 'आभूतिया' इति विश्लेषेण द्वादशाक्षरता। द्वितीये 'बिभर्षियभिभूते' इति विश्लेषेण। तृतीये 'क्रतुवा नो मन्यो सहमेदियेधि' इति विश्लेषेण। तेन केवला जगती॥ ६॥

**(सं.भा.)** आभूत्या अभिभवनशक्त्या सहजातः। सायक अन्तकारिन्। अभिभूते अभिभवितः। उत्तमं सहः। क्रत्वा शत्रुमथनकर्मणा सह मेदी स्निह्यन् भव। महाधनं युद्धम्। संसृजि सङ्घर्षे॥ ६॥

**संसृष्टन्धनमुभयंसमाकृतमस्मभ्यन्दत्तांवरुणश्चमन्युः।**
**भियन्दधानाहृदयेषुशत्रवꣳपराजितासोऽअपनिलयन्ताम्॥ ७॥**

**हरिः ओम्**

**सम्+सृष्टम्। धनम्। उभयम्। सम्+आकृतम्। अस्मभ्यम्। दत्ताम्। वरुणः। च। मन्युः॥ भियम्। दधानाः। हृदयेषु। शत्रवः। परा+जितासः। अप। नि। लयन्ताम्॥ ७॥**

**इति द्वितीयं सूक्तम्**

—०—

'अस्मभ्यं धत्ताम्' इत्याथर्वणः पाठः। 'भियो दधाना' इति च।

संसृष्टं सङ्गतमुभयं धनम्। पूर्वमर्धराज्यं धृतराष्ट्रेण दत्तमेवेति अर्धं कौरवाणामर्धमस्माकमित्युभयं संयुक्तं सत् समग्रं राज्यम्। समाकृतं समाहृतं समाकृष्टम्। दुर्योधनात् समाकृष्य अस्मभ्यं दत्तां प्रत्यर्पयतां वरुणश्च मन्युः। ननु मन्युरत्र स्तूयते। पुनः कोऽयं वरुणो वरुण इति? ननु भोः व्यस्मार्षीद् भवान्। वरुणोऽपि प्रस्तुतः–मन्युर्होता वरुणो जातवेदा इति। ननु तत्र वरुणोऽनिरुद्ध इत्यगादि। अहो किमिह नरसिंह एकाकी राज्यप्रत्याहरणे न प्रभूयादिति भियाऽनिरुद्धोऽपि सम्प्रार्थ्यते? यदि पूर्वप्रस्तुतानि भगवद्रूपाणि पुनरुपसंहर्तव्यानीति मनीषा तदा पश्चापि प्रस्तोतव्यानीति न्यूनता स्यात्। न तथा। शृणु तथ्यम्। लौकिकस्य सम्पदः योगक्षेमप्रार्थनमिदम्। तथाच वरुण इति नरसिंहात्माऽनिरुद्धः। मन्युरिति प्रद्युम्नः। पूर्वमन्त्रे तस्य प्रस्तुतत्वात्। तथाच नरसिंहस्य द्वे रूपे अत्र विशिष्य स्तूयेते योगाय क्षेमाय च। प्रद्युम्नो हि सृष्टिकर्ता धनमप्राप्तं प्रापयति। अप्राप्तप्राप्तिरेव हि योगः। अनिरुद्धः प्राप्तं यथा द्रुतं न नश्येत् तथा परिरक्षति। प्राप्तस्य परिरक्षणमेव हि क्षेमः। तथाच प्रद्युम्नात्मा नरसिंहो वियुक्तं राज्यं योजयतु। अनिरुद्धात्मा च यथा धर्मराजस्य प्रमादेन पुनर्न प्रणश्येत् तथा चिरं स्थापयत्विति भीमसेनः प्रार्थयामासेति सर्वं सुन्दरम्। उक्तं च ऋषभसूक्ते–'योगक्षेमं व आदायाहम्' इति। अथचोभयं धनं बाह्यमान्तरं च। दैवं मानुषं च। विद्या च वित्तं च। तैः सम्पादितं पुण्यं च राज्यं च। तैः सम्पादितं ज्ञानम्, तैः कृतं च पुण्यं कर्म न तेषां फलप्रदं भवतु। असुरा अपात्राणि हि ते। अतस्तैः समार्जितयोः ज्ञानकर्मणोरपि फलं तेभ्यः समाकृत्य समाहृत्यास्मभ्यं दत्तां वरुणश्च मन्युरिति। धत्तामिति पाठेऽपि स एवार्थः। दानेऽपि हि दधातिं पठन्ति। 'यो देवानां नामधा' इति च श्रुतिः। देवानां नामधारकः तेषां नामदाता च भगवानेक एवेति मन्त्रार्थः। देवैः कृतं पापं कर्मासुरान् याति। असुरैः कृतं पुण्यं कर्म देवानिति हि शास्त्रसम्प्रदायः। 'दुर्हृदः पापकृत्याम्' इति श्रुतिसूचितं चैतत्। तदेतन्मुखत उक्तं चर्षभसूक्ते–'आ वश्चित्तमा वो व्रतमा वोऽहं समितिं ददे' इति। चित्तमिति ज्ञानम्। व्रतमिति कर्म। अत्र तेषां ज्ञानं कर्म चास्मभ्यं द्विरूपो नरसिंहो ददात्विति प्रार्थयामास। उत्तरसूक्ते च नृसिंहो ददाविति, अहं च स्वीचकरेति

साभिमानमाह– वोऽहमादद इति । अथ 'समितिमाददे' इत्युक्तं शत्रुपराभवमर्थयते – भियं दधानाः । शत्रवः धार्तराष्ट्रास्तदनुबन्धिनश्च प्रत्यहं पराजिताः सन्तः अत एव सम्प्रति हृदयेषु पराभवभियं दधानाः, बहिर्युध्यमाना अप्यन्तर्मनसि अवधृतपराजया इत्यर्थः । अन्ततः सर्वात्मना पराजिता भूत्वा क्वाप्यपकृष्टे तमसि निलीयन्तां कौरवाः । अन्ये सात्विका राजसाश्च तत्पक्षगता युद्धरङ्गादपगताः मृताः सन्तः क्वापि स्वस्वयोग्यस्थानेषु निवसन्त्विति । अस्मिन्नर्थे निलयन्तां निरयन्तामित्यर्थः । अय गतौ । रस्य लः । 'उपसर्गस्यायतौ' (अ.सू.८.२.१९) इति हि पाणिनिः । 'अयतौ परत उपसर्गस्य यो रेफस्तस्य लकार आदेशो भवति' इति वामनः । तद्यथा परा+अयते पलायते ।

एवं स्फुटं भारतकथासङ्गता एते मन्त्रवर्णा मन्युनामक ऋषावपि यथासम्भवं योजनीयाः ।

यद्यपि कात्यायनोऽनुक्रमणिकायामियं जगतीत्याह । सत्यं जगती । अथापि विराड् जगतीति वक्तुमुचितम् । द्वितीयतुरीययोरेकादशाक्षरत्वात् । अथापि कात्यायनवचनं कथञ्चिद् योजनीयमिति यद्यागृह्यते– शृणु तदा जागतत्वसम्पादनसरणिम् । संयोगव्यूहेनाक्षरपूरणं किल प्राचामाचारः । तथाचात्र द्वितीयचरणे–'अस्मभियम्' इति, 'मनियुः' इति च विश्लेषेण त्रयोदशाक्षरतेति संहत्य चतुर्षु पादेष्वष्टचत्वारिंशदक्षराणीति केवला जगतीति ॥ ७ ॥

**मन्युसूक्तमिदमद्भुतभावं भीमसेनपरिदृष्टमपूर्वम् ।**
**व्याचकार पवमानसपर्यापूतविद्यगुरुदर्शितपद्यः ॥**

**मारुतिसेवातुष्टं गुणपुष्टं समाश्रये दाशरथिम् ।**
**मध्यमपाण्डवजुष्टं कृष्णमथो देवकीतनयम् ॥**

**निःशङ्कदग्धलङ्कः प्रीणातु कपिः कृपालुरकलङ्कः ।**
**पृक्षो दुर्जनरूक्षो रक्षतु भीमः कृपावृष्ट्या ॥**



**दुर्मततिमिरद्युमणी रमणीयतनुस्तनोतु शमलोपशमम् ।**
**रामः कृष्णो व्यासो व्यासञ्जयन्तु जयन्तु चान्तररीन् ॥**

**रक्षोवक्षोदलनं पृक्षो दक्षोऽथ यस्य संस्तवने ।**
**त्र्यक्षो भूतिवलक्षो यस्य प्रतिमा तमक्षयं वन्दे ॥**

**इमामाचार्यगोविन्दश्चक्रे मान्यवसूक्तयोः ।**
**भावार्थचन्द्रिकां तेन प्रीयेतां मध्वमाधवौ ॥**

**इत्याचार्यगोविन्दस्य कृतिषु मन्युसूक्तभाष्यं सम्पूर्णम् ।**

—०—

**(सं.भा.)** समाकृतं समानीतम् । उभयं धार्तराष्ट्रं पाण्डवं च । विद्यावित्तात्मकं वा धनमुभयम् । वरुण इत्यनिरुद्धः ॥ ७ ॥

**इदमाचार्यगोविन्देनार्पितं हरिपादयोः ।**
**इति सङ्ग्रहभाष्यं श्रीमतोर्मान्यवसूक्तयोः ॥ ❊ ॥**

**इत्याचार्यगोविन्दस्य कृतिषु मन्युसूक्तसङ्ग्रहभाष्यं सम्पूर्णम्**






**ॐ ॥ यत्र काकाः कोकिलन्ति पण्डितन्ति जडा अपि।**
**दुर्योधनन्ति बोद्धारस्तत्र देवो नृसिंहति ॥**

**नत्वा नृसिंहवपुषं दृष्टं भीमेन संयुगे।**
**घ्नता दुर्योधनं सूक्तं सपत्नघ्नं विवृण्महे ॥**

अथातः सपत्नघ्नं सूक्तं व्याख्यास्यामः। सपत्नघ्नस्य वा सूक्तम्। ऋषभसूक्तमित्यप्याहुः। ऋग्वेदे दशममण्डले १६६तमं सूक्तम्। सूक्तस्यास्य ऋषिच्छन्दसी अधिकृत्य कात्यायन एवमाह सर्वानुक्रमण्याम्–'ऋषभम्, ऋषभो वैराजः, शाक्करो वा, सपत्नघ्नमानुष्टुभं महापङ्क्त्यन्तम्' इति। अयमर्थः। पञ्चेति पूर्वसूत्रादनुवर्तते– ऋषभं पञ्चेति। ऋषभमित्याद्यं पञ्चर्चं सूक्तमित्युक्तं भवति। ऋषभो वैराज ऋषिः। शाक्करो वा वैराजः। सपत्नघ्नं नामेदं सूक्तं सपत्नघ्नदेवत्यं च। आद्यमृक्चतुष्टयमानुष्टुभम्, अन्त्या महापङ्क्तिरिति। षड्भिरष्टाक्षरपादैर्हि महापङ्क्तिर्नाम जगतीभेदः। तदुक्तम्–'षडष्टका महापङ्क्तिः' इति।

अस्तु छन्दश्चिन्ता। अथ कोऽयमृषिः? ऋषभो वैराज इति? ऋषभो वा शाक्कर इति?

सूक्तार्थानुसन्धानेन पुनरेतावदवगम्यते–क्षत्रियोऽयमृषिः स्यादिति, मन्युरिव मन्युसूक्ते।

विराडिति प्रायोऽस्य जननी। विराजस्तनय इति वैराजोऽयमृषभः।

शक्कर इति प्रायोऽस्य जनकः। शक्करस्य तनय इति शाक्करोऽयमृषभः।

शक्कर इति वृषनामस्वपि पठन्ति। सोऽयं पिता स्वतनयस्यापि वृषनामैव ददौ ऋषभ इतीति सुन्दरम्।

वृषभो हि पौरुषलक्षणम् । महावीरं हि पुरुषर्षभमाचक्षते । तस्मात् क्षत्रियाणां प्रियपौरुषाणां वृषभ इति प्रियसङ्केतः ।

किन्त्वस्य शक्वरस्य तत्तनयस्य शाक्वरस्य वा कमपीतिहासं नोपलभामहे । स्यान्नाम कश्चन पुरातनो राजर्षिः । आचार्यमध्वस्तु कमप्यपूर्वं प्रमेयविशेषमाविश्चकार । तथाहि महाभारततात्पर्यनिर्णये–

‘कृष्णं द्यूते निधेहीति यदवादीत् सुयोधनः ।
‘तत्प्रतिज्ञानुसारेण भीमो मूर्धानमक्रमीत् ।
‘ऋषभं मा समानानामिति सूक्तं ददर्श च ॥

‘तेषां पुण्यानि विद्याश्च समादायैव सर्वशः ।
‘तांश्चकार तमोगन्तॄंस्तस्य मूर्ध्नि पदाऽऽक्रमन्’ इति ॥ (२८.२४–५)

अस्तु नाम कश्चिदज्ञात ऋषिः शाक्वरो वैराजो वर्षभः । ततोऽपि देवर्षभः पुरुषर्षभो भीमसेन ऋषिरिति सुन्दरमनुसन्धानम् । समग्रं सूक्तं भीमसेनस्य स्वगतमिव भासते । महाभारतगतां दुर्योधनमस्तकमर्दनकथां स्मारयदिव स्फुटमवगम्यते ।

भीमसेनोऽपि वैराजः शाक्वरो वा । कथं वैराजः? विराट्पुरुषत्वात् । कथमथ शाक्वरः? शक्व इति गजः । तत्समुदायः शाक्वं गजता । तेन रमत इति शाक्वरो भीमसेनः । प्रसिद्धं चैतन्महाभारते ।

अस्तु वैराज ऋषभ ऋषिः । अस्तु च पाण्डवर्षभो भीमसेन ऋषिः । अथ काऽत्र देवता?

ननूक्तं सपत्नघ्नदेवत्यमिति । सत्यमुक्तम् । अथापि कोऽयमश्रुतपूर्वो देवः सपत्नघ्नो नाम ?

कोऽन्यः स्यात् मन्युसूक्तगदितान्नरसिंहात्? तथाचास्य सूक्तस्य भीमसेन ऋषिः । नरसिंहो देवता । तदेवं भीमसेनसङ्गततयैवापूर्वं सूक्तार्थमुपरिष्टाद् वक्ष्यामः ।



सूक्तफलमाह शौनकः–‘ऋषभं मा सपत्नघ्नम्’ इति बृहद्देवतायाम् । ‘सपत्नघ्नं प्रयुञ्जीत ऋषभं जपहोमयोः’ इत्यृग्विधाने । शत्रुनाशार्थं सूक्तमिदं जपे होमे च प्रयुञ्जीतेत्यर्थः । आश्वलायनस्तु विनियोगान्तरमाह गृह्यसूत्रे–‘ऋषभं मा समानानामित्यभिक्रामन्’ इति । प्रयाणकाले शत्रुभिश्चोरैः व्याघ्रादिभिः श्वापदैर्वाऽऽत्मरक्षार्थं सूक्तमेतत् पठन्नभिक्रामेदित्यर्थः ॥

## हरिः ओ३म् ॥

**ऋ॒ष॒भम्मा॑समा॒नानां॑स॒पत्ना॑नांविषास॒हिम् ।**
**ह॒न्ता॒रं॑शत्रू॑णाङ्कृधिवि॒राज॒ङ्गोप॑ति॒ङ्गवा॑म् ॥ १ ॥**

**ऋ॒ष॒भम् । मा॒ । स॒मा॒नाना॑म् । स॒+पत्ना॑नाम् । वि॒+स॒स॒हिम् ॥**
**ह॒न्तार॑म् । शत्रू॑णाम् । कृ॒धि॒ । वि॒+राज॑म् । गो+प॑तिम् । गवा॑म् ॥ १ ॥**

हे नृसिंह, समानानां क्षत्रियाणां योद्धॄणां सपत्नानां दुर्योधनादीनां विषासहिमनभिभाव्यं मामृषभं कृधि श्रेष्ठम् । समानानामृषभं कृधि, सपत्नानां च विषासहिं कृधीति वा । कुले जाता बान्धवा एव सन्तो ये द्रुह्यन्ति ते सपत्नाः । अन्येषां च शत्रूणां हन्तारं कृधि । विशेषेण राजन्तं गवां विद्यानां गोपतिं गोप्तारं च कृधि । गवां मध्ये याः श्रेष्ठाः गावो वेदविद्यास्तासां वा पतिं कृधि ॥ १ ॥

**अ॒हमं॑स्मिसपत्न॒हेन्द्रं॑ऽइ॒वारिं॑ष्टो॒ऽअक्षं॑तः ।**
**अ॒धस्स॒पत्ना॑मेप॒दोरि॒मेसर्वे॑ऽअ॒भिष्ठिं॑ताः ॥ २ ॥**

**अ॒हम् । अ॒स्मि॒ । स॒प॒त्न॒+हा । इन्द्रः॑+इव । अरि॑ष्टः । अक्ष॑तः ॥**
**अ॒धः । स॒+पत्नाः॑ । मे॒ । प॒दोः । इ॒मे । सर्वे॑ । अ॒भि+स्थि॑ताः ॥ २ ॥**

अहमस्मि सपत्नानां हन्ता । इन्द्रइव । मयि सन्निहितो नरसिंहइव । तदुपकरणतयाऽहमपि । ‘प्रधानाङ्गं हि मारुतिः’ । देवानां सपत्नहा देवेन्द्रइवेति वा । इन्द्रइव अर्जुनइवेति वा । अरिष्टः अशुभलेपरहितः । अत एव शत्रुभिरक्षतः । मे सपत्नाः सर्वे इमे मम पदयोरधःकृता अभितो लुठन्तस्तिष्ठन्ति ॥ २ ॥

**अत्रैववोपिनह्याम्युभेऽआर्त्नीऽइवज्ययां।**
**वाचस्पतेनिषेधेमान्यथामदधरंवदान् ॥ ३ ॥**

**अत्र। एव। वः। अपि। नह्यामि। उभेइति। आर्त्नीइवेत्यार्त्नी+इव। ज्यया॥ वाचः। पते। नि। सेध। इमान्। यथा। मत्। अधरम्। वदान् ॥ ३ ॥**

अत्रैव युद्धे वः सर्वानपि नह्यामि पिनद्धान् करोमि। उभे आर्त्नीइव धनुष्कोटी-इव ज्यया। तथा मम साहसगुणेन वो युद्धाय बद्धान् करोमि। वाचः पते वेदपते वेदव्यास, मत्तः अधरम् अधस्तादेव वावदूकान् इमान् यथार्हं निषेध निवारय। निकृष्टवचनान् नीचान् यथा तथेमान् मत्सकाशात् निवारयेति वा ।

'नह्यामि+उभे' इति पादयोरष्टाक्षरत्वम्॥ ३॥

**अभिभूरहमागमंविश्वकर्म्मेणधाम्ना।**
**आवश्चित्तमावोव्रतमावोहंसमितिन्ददे ॥ ४ ॥**

**अभि+भूः। अहम्। आ। अगमम्। विश्व+कर्मेण। धाम्ना॥ आ। वः। चित्तम्। आ। वः। व्रतम्। आ। वः। अहम्। सम्+इतिम्। ददे॥ ४॥**

हे कौरवाः, वोऽभिभविताऽहमागतः। सङ्ग्रामेऽभितोऽपि भवन् वा। सर्वतः सञ्चरन्। विश्वेषां जीवानाम्, विश्वस्य वा वायोर्यानि करांसि कर्माणि तानि तदन्तर्यामी सन् स्वयमेव माति निर्मिमातीति विश्वकर्मेण विश्वकर्मकरणक्षमेण तेजोरूपेण भगवता। तदनुग्रहेण। धाम्ना वा तेजसा मदीयेन। तदनुग्रहेणैव च वश्चित्तं मनोरथं आददे आहरामि। वो जयाभिलाषमात्मगतं करोमि। वो व्रतं शत्रुहननादि, वः समितिं समग्रं च युद्धमाददे वशे करोमि । अत्र द्वितीयपादे 'विशुवकर्मेण' इति विश्लेषेणाष्टाक्षरता॥ ४॥



**योगक्षेमंवऽआदायाहम्भूयासमुत्तमऽआवोमूर्द्धानमक्रमीम्।**
**अधस्पदान्मऽउद्वदतमण्डूकाऽइवोदकान्मण्डूकाऽउदकादिव॥ ५ ॥**

**॥ हरिः ओम् ॥**

**योग+क्षेमम्। वः। आ+दाय। अहम्। भूयासम्। उत्+तमः। आ। वः। मूर्धानम्। अक्रमीम्॥ अधः+पदात्। मे। उत्। वदत। मण्डूकाः+इव। उदकात्। मण्डूकाः। उदकात्+इव॥ ५॥**

राज्यलाभं तद्रक्षणं चाऽदायाहमुत्तमो भूयासम्। वः शिर आक्रम्य तिष्ठामि। मम पादस्याधः स्थिता उच्चै रटत वर्षजलधाराया अधःस्थिता मण्डूकाइवेति।

'योगक्षेमं व आदाय+अहं भूयासमुत्तमः' इति विश्लेषेणाऽद्यद्वितीय-पादयोरष्टाक्षरता। उत्तरार्धे प्रथमः पादो नवाक्षरः। द्वितीयः सप्ताक्षरः। संहत्य षोळशाक्षरतेति छन्दःपूर्तिः॥ ५॥

**इदमाचार्यगोविन्दः प्रमृष्टं शब्दतोऽर्थतः।**
**वितेने विमलं भाष्यं सूक्ते सापत्ननाशने॥**

**इत्याचार्यगोविन्दस्य कृतिषु सपत्नघ्नसूक्तभाष्यं समाप्तम्**

—०—

# ऋक्संहितानुसारी सूक्तानां पाठः



## अम्भ्रिणीसूक्तम्

[वागम्भ्रिणी ऋषिका । द्वितीया जगती, अन्यास्त्रिष्टुभः । स्वयं वागम्भ्रिण्येव देवता ।]

**हरिः ओ३म् ॥**

**अ॒हंरु॒द्रेभि॒र्वसु॑भिश्चराम्य॒हमा॑दि॒त्यैरु॒तवि॒श्वदे॑वैः ।**
**अ॒हम्मि॒त्रावरु॑णो॒भाबि॑भर्म्य॒हमि॑न्द्रा॒ग्नीऽअ॒हम॒श्विनो॒भा ॥**
**॥ १ ॥**

**अ॒हंसोम॑माह॒नसं॑म्बिभर्म्य॒हन्त्वष्टा॑रमु॒तपूष॒ण॒म्भग॑म् ।**
**अ॒हन्द॑धामि॒द्रवि॑णंह॒विष्म॑तेसुप्रा॒व्ये॒३॒यज॑मानायसुन्व॒ते ॥ २ ॥**

**अ॒हंराष्ट्री॑सङ्ग॒म॑नी॒वसू॑नाञ्चिकि॒तुषी॑प्रथ॒माय॒ज्ञिया॑नाम् ।**
**ताम्मा॑दे॒वाव्य॑दधुᳶपुरु॒त्राभूरि॑स्थात्रा॒म्भूर्य्या॑वे॒शय॑न्तीम् ॥ ३ ॥**

**मया॒सोऽअन्न॑मत्ति॒योवि॒पश्य॑ति॒यᳶप्राणि॑ति॒यऽईं॑शृ॒णोत्यु॒क्तम् ।**
**अ॒म॒न्तवो॒मान्तऽउप॑क्षियन्तिश्रु॒धिश्रु॑तश्रद्धि॒वन्ते॑वदामि ॥ ४ ॥**

**अ॒हमे॒वस्व॒यमि॒दंव॑दामि॒जुष्ट॑न्दे॒वेभि॑रु॒तमानु॑षेभिः ।**
**यङ्का॒मये॒तन्त॑मु॒ग्रङ्कृ॑णोमि॒तम्ब्र॒ह्माण॒न्तमृषि॒न्तंसु॑मे॒धाम् ॥ ५ ॥**

अहंरुद्रायधनुरातनोमिब्रह्मद्विषेशरवेहन्तवाऽउ ।
अहञ्जनायसमदङ्कृणोम्यहम्द्यावापृथिवीऽआविवेश ॥ ६ ॥

अहंसुवेपितरमस्यमूर्द्धन्ममयोनिरप्स्व१न्तस्समुद्रे ।
ततोवितिष्ठेभुवनानुविश्वोतामूम्द्यांवर्ष्मणोपस्पृशामि ॥ ७ ॥

अहमेववातऽइवप्रवाम्यारभमाणाभुवनानिविश्वा ।
परोदिवापरऽएनापृथिव्यैतावतीमहिनासम्बभूव ॥ ८ ॥

॥ हरिः ओ३म् ॥

**इत्यम्भ्रिणीसूक्तम्**

—०—

# मन्युसूक्तम्—१

[मन्युस्तापस ऋषिः । आद्या जगती । अन्याः सप्त त्रिष्टुभः । मन्युनामा श्रीनृसिंहो देवता ।]

॥ हरिः ओ३म् ॥

यस्तेमन्योविधद्वज्रसायकसहऽओजᳶपुष्यतिविश्वमानुषक् ।
साह्यामदासमार्य्यन्त्वयायुजासहस्कृतेनसहसासहस्वता ॥
॥ १ ॥

मन्युरिन्द्रोमन्युरेवासदेवोमन्युर्होतावरुणोजातवेदाः ।
मन्युंविशऽईळतेमानुषीर्य्याᳶपाहिनोमन्योतपसासजोषाः
॥ २ ॥



अभीहिमन्योतवसस्तवीयान्तपसायुजाविजहिशत्रून् ।
अमित्रहावृत्रहादस्युहाचविश्वावसून्याभरात्वन्नः ॥ ३ ॥

त्वंहिमन्योऽअभिभूत्योजास्स्वयम्भूर्भामोऽअभिमातिषाहः ।
विश्वचर्षणिस्सहुरिस्सहावानस्मास्वोजᳶपृतनासुधेहि ॥ ४ ॥

अभागस्सन्नपपरेतोऽअस्मितवक्रत्वातविषस्यप्रचेतः ।
तन्त्वामन्योऽअक्रतुर्जिहीळाहंस्वातनूर्बलदेयायमेहि ॥ ५ ॥

अयन्तेऽअस्म्युपमेह्यर्वाङ्प्रतीचीनस्सहुरेविश्वधायः ।
मन्योवज्रिन्नभिमामाववृत्स्वहनावदस्यूँरुतबोध्यापेः ॥ ६ ॥

अभिप्रेहिदक्षिणतोभवामेधावृत्राणिजङ्घनावभूरि ।
जुहोमितेधरुणम्मध्वोऽअग्रमुभाऽउपांशुप्रथमापिबाव ॥ ७ ॥

**॥ इति प्रथमं सूक्तम् ॥**

—०—

# मन्युसूक्तम्—२

[मन्युस्तापस ऋषिः । आद्यास्तिस्रस्त्रिष्टुभः । अन्या जगत्यः । मन्युनामा श्रीनृसिंहो देवता ।]

त्वयामन्योसरथमारुजन्तोहर्षमाणासोधृषितामरुत्वः ।
तिग्मेषवऽआयुधासंशिशानाऽअभिप्रयन्तुनरोऽअग्निरूपाः ॥ १ ॥

अग्निरिवमन्योत्विषितस्सहस्वसेनानीर्नस्सहुरेहूतऽएधि ।
हत्वायशत्रून्विभजस्ववेदऽओजोमिमानोविमृधोनुदस्व ॥ २ ॥

सहस्वमन्योऽअभिमातिमस्मेरुजन्मृणन्प्रमृणन्प्रेहिशत्रून् ।
उग्रन्तेपाजोनन्वारुरुध्रेवशीवशन्नयसऽएकजत्वम् ॥ ३ ॥

एकोबहूनामसिमन्यवीळितोविशंविशंयुधयेसंशिशाधि ।
अकृत्तरुक्त्वयायुजावयन्द्युमन्तङ्घोषंविजयायकृण्महे ॥ ४ ॥

विजेषकृदिन्द्रइवानवब्रवो३स्माकम्मन्योऽअधिपाभवेह ।
प्रियन्तेनामसहुरेगृणीमसिविद्मातमुत्संयतआबभूथ ॥ ५ ॥

आभूत्यासहजावज्रसायकसहोबिभर्ष्यभिभूतऽउत्तरम् ।
क्रत्वानोमन्योसहमेद्ध्येधिमहाधनस्यपुरुहूतसंसृजि ॥ ६ ॥

संसृष्टन्धनमुभयंसमाकृतमस्मभ्यन्दत्तांवरुणश्चमन्युः ।
भियन्दधानाहृदयेषुशत्रवःपराजितासोऽअपनिलयन्ताम् ॥ ७ ॥

हरिः ओ३म् ॥

**इति द्वितीयं सूक्तम्**

—०—



# सपत्नघ्नसूक्तम्

[वैराजः शाक्वरो वा ऋषभ ऋषिः । आद्याश्चतस्रोऽनुष्टुभः । पञ्चमी महापङ्क्तिः । श्रीनृसिंहो देवता ।]

हरिः ओ३म् ॥

ऋषभम्मासमानानांसपत्नानांविषासहिम् ।
हन्तारंशत्रूणाङ्कृधिविराजङ्गोपतिङ्गवाम् ॥ १ ॥

अहमस्मिसपत्नहेन्द्रऽइवारिष्टोऽअक्षतः ।
अधस्सपत्नामेपदोरिमेसर्वेऽअभिष्ठिताः ॥ २ ॥

अत्रैववोपिनह्याम्युभेऽआर्त्नीऽइवज्ययां ।
वाचस्पतेनिषेधेमान्यथामदधरंवदान् ॥ ३ ॥

अभिभूरहमागमंविश्वकर्म्मेणधाम्ना ।
आवश्चित्तमावोव्रतमावोहंसमितिन्ददे ॥ ४ ॥

योगक्षेमंवऽआदायाहम्भूयासमुत्तमऽआवोमूर्द्धानमक्रमीम् ।
अधस्पदान्मऽउद्वदतमण्डूकाऽइवोदकान्मण्डूकाऽउदकादिव
॥ ५ ॥

॥ हरिः ओ३म् ॥

—०—

**इति सपत्नघ्नसूक्तम्**

# अथर्वसंहितानुसारी सूक्तानां पाठः



## आथर्वणं राष्ट्रीदेवीसूक्तम्

### (चतुर्थकाण्डे त्रिंशं सूक्तम्)

[अथर्वा ऋषिः । त्रिष्टुप् छन्दः । षष्ठी जगती । सर्वरूपा सर्वात्मिका सर्वदेवमयी वाग् देवता ।]

**हरिः ओ३म् ॥**

**अहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।**
**अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ १ ॥**

**अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।**
**तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्य्यावेशयन्तः ॥ २ ॥**

**अहमेव स्वयमिदं वदामि जुष्टं देवानामुत मानुषाणाम् ।**
**यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥३॥**

**मया सोऽन्नमत्ति यो विपश्यति यः प्राणति य ईं शृणोत्युक्तम् ।**
**अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धेयं ते वदामि॥ ४ ॥**

**अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ ।**
**अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॥ ५ ॥**

अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् ।
अहं दधामि द्रविणा हविष्मते सुप्राव्या३ यजमानाय सुन्वते ॥
॥ ६ ॥

अहं सुवे पितरमस्य मूर्द्धन्मम योनिरप्स्व१न्तः समुद्रे ।
ततो वि तिष्ठे भुवनानि विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥
॥ ७ ॥

अहमेव वात इव प्र वाम्यारभमाणा भुवनानि विश्वा ।
परो दिवा पर एना पृथिव्यैतावती महिम्ना सम्बभूव ॥ ८ ॥

हरिः ओ३म् ॥

**इति राष्ट्रीदेवीसूक्तम्**

—०—



# सेनानिरीक्षणसूक्तम्

(चतुर्थकाण्डे एकत्रिंशं सूक्तम्)

[ब्रह्मास्कन्द ऋषिः । १,३, त्रिष्टुप्, २,४,भुरिक्, ५-७ जगती । मन्युर्देवता ।]

हरिः ओ३म् ॥

त्वया मन्यो स रथमारुजन्तो हर्षमाणा हृषितासो मरुत्वन् ।
तिग्मेषव आयुधा संशिशाना उप प्र यन्तु नरो अग्निरूपाः ॥ १ ॥

अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि ।
हत्वाय शत्रून् वि भजस्व वेद ओजो मिमानो विमृधो नुदस्व ॥
॥ २ ॥

सहस्व मन्यो अभिमातिमस्मै रुजन्मृणन्प्रमृणन् प्रेहि शत्रून् ।
उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयासा एकजत्वम् ॥ ३ ॥

एको बहूनामसि मन्य ईडिता विशंविशं युद्धाय सं शिशाधि ।
अकृत्तरुक् त्वया युजा वयं द्युमन्तं घोषं विजयाय कृण्मसि ॥
॥ ४ ॥

विजेषकृदिन्द्र इवानवब्रवो३स्माकं मन्यो अधिपा भवेह ।
प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूथ ॥ ५ ॥

आभूत्या सहजा वज्र सायक सहो बिभर्षि सहभूत उत्तरम् ।
क्रत्वा नो मन्यो सह मेद्येऽधि महाधनस्य पुरुहूत संसृजि ॥ ६ ॥

संसृष्टं धनमुभयं समाकृतमस्मभ्यं धत्तां वरुणश्च मन्युः ।
भियो दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥
॥ ७ ॥

हरिः ओ३म् ॥

**इति सेनानिरीक्षणसूक्तम्**

—०—

# सेनासंयोजनसूक्तम्

(चतुर्थकाण्डे द्वात्रिंशं सूक्तम्)

[ब्रह्मास्कन्द ऋषिः । आद्या जगती । अन्यास्त्रिष्टुभः । मन्युर्देवता ।]

हरिः ओ३म्

यस्ते मन्योऽविधद् वज्र सायक सह ओजः पुष्यति विश्वमानुषक् ।
साह्याम दासमार्यं त्वया युजा वयं सहस्कृतेन सहसा सहस्वता॥
॥ १ ॥

मन्युरिन्द्रो मन्युरेवाऽस देवो मन्युर्होता वरुणो जातवेदाः ।
मन्युर्विश ईडते मानुषीर्याः पाहि नो मन्यो तपसा सजोषाः
॥ २ ॥



अभीऽहि मन्यो तवसस्तवीयान् तपसा युजा वि जहि शत्रून् ।
अमित्रहा वृत्रहा दस्युहा च विश्वा वसून्या भरा त्वं नः ॥ ३ ॥

त्वं हि मन्यो अभिभूत्योजाः स्वयम्भूर्भामो अभिमातिषाहः ।
विश्वचर्षणिः सहुरिः सहीवानस्मास्वोजः पृतनासु धेहि ॥ ४ ॥

अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः ।
तं त्वा मन्यो अक्रतुर्जिहीडाहं स्वा तनूर्बलदावा न एहि ॥ ५ ॥

अयं ते अस्म्युप न एह्यर्वाङ् प्रतीचीनः सहुरे विश्वदावन् ।
मन्यो वज्रिन्नभि न आ ववृत्स्व हनाव दस्यूँरुत बोध्यापेः ॥ ६ ॥

अभि प्रेहि दक्षिणतो भवा नोऽधा वृत्राणि जङ्घनाव भूरि ।
जुहोमि ते धरुणं मध्वो अग्रमुभावुपांशु प्रथमा पिबाव ॥ ७ ॥

हरिः ओ३म् ॥

**इति सेनासंयोजनसूक्तम्**

—०—

# नृसिंहस्तवः

अस्तु तेजस्वि नोऽधीतमस्तु च ब्रह्मवर्चसम् ।
सम्पादयेम हि सहः सह वीर्य्यं कृषीमहि ॥ १ ॥

स्तम्भं निर्भिद्य निर्य्यन्निखिल-जगदघ-क्षाळनायाव-तीर्ण्णं
पूर्ण्णं स्वर्ण्णोपमान-द्युति-विहत-तमस्तोममस्तारि-वर्ग्गम् ।
स्वस्ति श्रीमत् समस्त-श्रुति-गदितमहो तन्महो नो विदद्ध्यात्
पञ्चास्यं कन्धराया उपरि परि-गतं देव-वृन्दैरमन्दैः ॥ २ ॥

उग्रं व्यग्रेन्द्र-लोकाभयदमरि-दराद्यायुधोदग्र-बाहुं
रुद्रं रुद्रेन्द्र-मुख्यामर-गण-विनुतं भद्र-विज्ञान-मुद्रम् ।
वीरं वीरासन-स्थं भव-भय-हरणं दारणं दारुणानां
रूक्षं त्र्यक्षं महेक्षं क्षपित-दुरितमक्षोभणीयं दिदृक्षे ॥ ३ ॥

ज्वलत्कनक-पिञ्जरं कलित-भक्त-हृत्पञ्जरं
चिरं मुदित-निर्ज्जरं श्रुति-महाटवी-कुञ्जरम् ।
भजे भुवन-बन्धुरं हृदि निजेन्दिरा-मन्दिरं
परं तुरग-कन्धरं दर-धरं नृ-कण्ठीरवम् ॥ ४ ॥

जगन्निधान-पिठरं नृ-हरेर्ज्जठरं नुमः ।
यन्नाभि-कुहरोद्भूतस्तनयो हंस-वाहनः ॥ ५ ॥



यदुत्सङ्गासङ्गा जगदुदय-भङ्गाऽब्धि-तनया
यदुद्गीता गीता विषय-विष-भीतावनकरी ।
सुधी-मुद्रा भद्रा दुरित-गण-विद्रावण-करी
नमस्तस्मै कस्मैचिदमर-पुषे सिंह-वपुषे ॥ ६ ॥

नर-केसरिणं धिक्कृत-हिरण्य-करिणं च सूकरिणम् ।
तोषित-बुध-जन-हरिणं वरिनं दरिणं स्मरामि मन्दरिणम् ॥
॥ ७ ॥

इममाचार्य्य-गोविन्दे सन्निधाय हरिस्तवम् ।
रचयामासतुः प्रेम्णा प्राण-नारायणौ स्वयम् ॥ ८॥

—०—

# तारतम्यमीमांसा

**नत्वा नारायणं देवं मध्वं मूलगुरुं तथा ।**
**प्रणीयते तारतम्यमीमांसा हरितुष्टये ॥**

विष्णोः सर्वोत्तमत्वं वायोश्च जीवोत्तमत्वं न सम्यगवगम्यते विना तारतम्यमीमांसाम् । विष्णुभक्तिश्च सर्वाधिका न देवतासु परिवारभूतासु तारतम्यपरिज्ञप्तिं विना शक्यमनुसन्धातुम् । तत इयं तारतम्यमीमांसा प्रस्तूयते–

१. परमपुरुषो नारायणः । गुणतो देशतः कालतः शक्तितश्चानन्तः ।

**[मत्स्यकूर्म्मक्रोडसिंहवटुभार्ग्गवराघवाः ।**
**कृष्णबुद्धौ कल्किदत्तहयशीर्षैतरेयकाः ॥**

**पाराशर्य्यश्च कपिलो वैकुण्ठो वृषभस्तथा ।**
**यज्ञो धन्वन्तरिश्चैव स्त्रीरूपस्तापसो मनुः ॥**

**नारायणो हरिः कृष्ण उपेन्द्राः सर्व एव च ।**
**एवमाद्या हरेः साक्षात् प्रादुर्भावाः प्रकीर्त्तिताः ॥]**

२. परा प्रकृतिर्लक्ष्मीः । नारायणादनन्तांशावरा ।

**[श्रीर्भूर्दुर्ग्गाऽम्भृणी ह्रीश्च महालक्ष्मीश्च दक्षिणा ।**
**सीता जयन्ती सत्या च रुग्मिणीत्यादिभेदिता ॥]**

३. हिरण्यगर्भः । मुख्यप्राणश्च । लक्ष्म्याः कोटिगुणावरौ ।

**[प्राणः सूत्रं महान् ब्रह्मा चित्तं वायुर्बलं धृतिः ।**
**स्थितिर्य्योगश्च वैराग्यं ज्ञानं प्रज्ञा स्मृतिः सुखम् ॥**



**मेधा मुक्तिर्विष्णुभक्तिरादिगोपो महाप्रभुः ।**
**ऋजुः सुमानो विज्ञाता महाख्याता महागुरुः ॥**

**हनूमान् भीम आनन्द इत्यादिबहुरूपिणः ।**
**हिरण्यगर्भा येऽतीता ये भाव्या यश्च वर्त्तते ॥]**

४. हिरण्यगर्भपत्नी सरस्वती । मुख्यप्राणपत्नी भारती च । ब्रह्मवायुभ्यां शतगुणावरे ।

**[सरस्वती च गायत्री श्रद्धाऽऽद्या प्रीतिरेव च ।**
**सर्ववेदात्मिका बुद्धिरनुभूतिः सुखात्मिका ॥**

**गुरुभक्तिर्हरौ प्रीतिः सर्वमन्त्रात्मिका भुजिः ।**
**शिवकन्येन्द्रसेना च द्रौपदी काशिजा तथा ।**
**चन्द्रेत्यादिस्वरूपा यास्तेभ्यः शतगुणावराः ॥]**

५. गरुडः । शेषः । रुद्रश्च [एकादशरुद्रेषु यः प्रधानः] । सरस्वतीभारतीभ्यां शतगुणावराः ।

**[शेषः सदाशिवश्चोर्ध्वस्तपोऽहङ्कार एव च ।**
**नरोऽवटो लक्ष्मणश्च रौहिणेयः शुकस्तथा ॥**

**सद्योजातो वामदेवश्चाघोरस्तत्पुमानपि ।**
**दुर्वासा द्रौणिरौर्वश्च जैगीषव्यादिरूपकः ॥]**

६. विष्णोः कृष्णावतारे षण्महिष्यो नीला, भद्रा, मित्रविन्दा, काळिन्दी, लक्षणा, जाम्बवती च । [आसु जाम्बवती प्रधाना । लक्ष्म्या विशेषावेशदशायां शेषतुल्या ।] गरुडशेषरुद्रेभ्यः पञ्चगुणावराः ।

७. गरुडपत्नी सुपर्णी । शेषपत्नी वारुणी । रुद्रपत्नी पार्वती च । एता गरुडशेषरुद्रेभ्यो दशगुणावराः ।

८. पुरन्दरः । कामश्च । सुपर्णीवारुणीपार्वतीभ्यो दशगुणावराः ।

**[वाली गाधिर्विकुक्षिश्च पार्थ इन्द्रः पुरन्दरः ।**
**सुदर्शनश्च भरतः प्रद्युम्नः स्कन्द एव च ।**
**सनत्कुमारः कामश्चेत्येक एव व्यवस्थितः ॥]**

९. शरीरमानी अहम्प्राणः [४९मरुत्सु प्रधानः]। पुरन्दरकामाभ्यां दशगुणावरः ।

१०. पुरन्दरपत्नी शची । कामपत्नी रतिः । कामपुत्रोऽनिरुद्धः । बृहस्पतिः । स्वायम्भुवमनुः । दक्षप्रजापतिश्च । अहम्प्राणाद् दशगुणावराः ।

११. स्पर्शमानी प्रवहः [४९ मरुत्सु द्वितीयः] । अनिरुद्धादिभिः पञ्चगुणावरः ।

१२. चन्द्रः । सूर्यः । सूर्यपुत्रो यमः । स्वायम्भुवमनुपत्नी शतरूपा च । [द्वादशस्वादित्येषु सूर्यस्तृतीयः । तत्र प्रथमो विष्णुर्वामनोऽदित्यां जातः । इन्द्रानुजतया जात इति तमुपेन्द्रमाचक्षते । द्वितीयोऽष्टमकक्ष्यागतः पुरन्दराख्य इन्द्रोऽदित्यां पूर्वजातः ।] एते प्रवहाद् द्विगुणावराः । अनिरुद्धादिभ्यो दशगुणावराः ।

१३. वरुणः [द्वादशस्वादित्येषु चतुर्थः] ।

१४. नारदः ।

१५. अग्निः [अष्टवसुषु प्रधानः] । वरुणपुत्रो भृगुमुनिः। दक्षप्रजापतिपत्नी स्वायम्भुवमनुपुत्री प्रसूतिश्च । एते चन्द्रादिभ्यो दशगुणावराः ।

१६. वैवस्वतमनुः । विश्वामित्रः । महर्षयः सप्त पूर्वे– मरीचिः, अत्रिः, अङ्गिराः, पुलस्त्यः, पुलहः, क्रतुः, वसिष्ठश्चेति ।



१७. मित्रः [द्वादशस्वादित्येषु पञ्चमः] । निरृतिः । बृहस्पतिपत्नी तारा । प्रवहवायुपत्नी प्रावही च ।

१८. विघ्नाधिपतिर्गणपतिर्भूताकाशमानी । धनपतिः कुबेरः । वायुजो विष्वक्सेनः । सूर्यजावश्विनौ नासत्यदस्रौ नाम । प्रधानवसुमग्निमृते सप्तान्ये वसवः–द्रोणः, प्राणः, ध्रुवः, अर्कः, दोषः, वस्तुः, विभावसुश्चेति । [वसूनामपि नामान्तराणि पठ्यन्ते । वस्तुरेव द्युवसुः, यो भीष्मो बभूव ।] उक्तान् पञ्च वक्ष्यमाणं चैकं विहाय षडादित्याः– अर्यमा, पूषा, त्वष्टा, सविता, भगः, धाता चेति । [आदित्यानामपि बहुधा नामानि पठ्यन्तेऽन्यान्यग्रन्थेषु । बहुनामानो हि देवाः ।] दश विश्वेदेवाः– क्रतुः, दक्षः, सवः, सत्यः, कामः, कालः, धुरिः, लोचनः, पुरूरवः, आर्द्रवश्चेति । एकादशसु रुद्रेषु प्रधानं विहायान्ये दश– रैवतः, ओजः, भवः, भीमः, वामः, उग्रः, वृषाकपिः, अजैकपात्, अहिर्बुध्निः, विरूपाक्षश्चेति । [रुद्राणामपि नामान्तराण्यन्यत्र पठ्यन्ते ।] एकोनपञ्चाशन्मरुत्सु अहम्प्राणं प्रवहं च विहायावशिष्टाः ४७ मरुतः– प्राणः,अपानः,व्यानः,उदानः, समानः, नागः,कूर्मः, कृकलः, देवदत्तः, धनञ्जयः, आवहः, उद्वहः, परावहः, विवहः, संवहः, शम्भुः, शङ्कुः, कलः, श्वासः, अनलः, अनिलः, प्रतिभः, कुमुदः, कान्तः, शुचिः, श्वेतः, अजितः, गुरुः, सञ्ज्ञः, प्रवर्तकः, कालः, दक्षः, सोम्यः, कपिः, जडः, मण्डूकः, सन्ततः, सिद्धः, रक्तः, कृष्णः, पिकः, शुकः, यतिः, भीमः, हनुः, पिङ्गः, कम्पनश्चेति । [मरुतामपि बहुविधानि नामानि पठ्यन्ते । नैकत्राप्येकरूपता । तत्रायमेकः प्रकारः प्रतनैरुद्धृतः] । पितृपतिष्वेकः कव्यवाहनामाऽग्निः । [त्रिषु प्रधानपितृपतिषु द्वौ यमसोमौ नाम द्वादशकक्ष्यायां गतौ] । ऋभवस्त्रयः– ऋभुः, विभ्वा, वाजश्चेति । द्यावापृथिवीमानिन्यौ च देव्यौ ।

१९. प्रधानवायुपुत्रो भूतवायुमानी मरीचिः[१] । प्रधानाग्निपुत्रो भूताग्निमानी पावकः । पादमानिनाविन्द्रपुत्रौ यज्ञनामा जयन्तः, शम्भुश्च । दैत्यगुरुः शुक्रः । तत्सोदरश्च्यवनः । बृहस्पतिसोदर उचथ्यः । उक्तं सनत्कुमारं विहायान्ये त्रयो ब्रह्मणो मानसपुत्रा ऋषयः– सनकः, सनन्दनः, सनातनश्च । सप्त चान्य ऊर्ध्वरेतसः । एतान् दश, पूर्वोक्तान् सनत्कुमारादींश्च दश विहायान्ये काश्यपाद्या अशीतिर्गृहस्था ऋषयः । भाविमन्वन्तराणामिन्द्राः सप्त– बलिः, अद्भुतः, शम्भुः, विधृतिः, ऋतधामा, दिवस्पतिः, शुचिश्च । [अतीतेषु मन्वन्तरेषु प्रथमे स्वायम्भुवेऽन्तरे यज्ञनामा विष्णुरेवेन्द्रः । द्वितीये स्वारोचिषे रोचननामा वायुः । तृतीये चौत्तमे सत्यजिन्नामा यम इन्द्रः । चतुर्थे तापसे पञ्चमे च रैवते त्रिशिखविभुनामानौ नासत्यदस्रावश्विनाविन्द्रौ । षष्ठे चाक्षुषे मन्द्रद्युम्नः, स एव च सप्तमे वैवस्वतेऽन्तरे पुरन्दरनामेन्द्रः । तमेतमष्टमकक्ष्यागतमिन्द्रमाचक्षते ।] त्रीनुक्तान् विहायावशिष्टा एकादश मनवः– स्वारोचिषः, उत्तमः, रैवतः, चाक्षुषः, सावर्णिः, दक्षसावर्णिः, ब्रह्मसावर्णिः, धर्मसावर्णिः, रुद्रसावर्णिः, देवसावर्णिः, इन्द्रसावर्णिश्चेति । [प्रथमः स्वायम्भुवो मनुर्दशमकक्ष्यायां गतः । चतुर्थस्तापसो मनुः स्वयं विष्णुरेव । सप्तमो वैवस्वतः षोडश्यां कक्ष्यायां गतः । अपरे त्वेकादशात्र ।] दशसु पितृपतिषु पूर्वोक्तान् यमसोमकव्यवाहान् विहायान्ये सप्त । अष्टौ विष्णोर्द्वारपालकाः– जयः, विजयः, चण्डः, प्रचण्डः, नन्दः, सुनन्दः, कुमुदः, कुमुदेक्षणश्चेति । अष्टौ प्रधानगन्धर्वाः । अष्टौ प्रधानाप्सरसः । विश्वकर्मा । चित्रगुप्तः । सूर्यसारथिररुणः । नन्दी । ऐरावतः । सुरभिः । कल्पवृक्षादिदेवताः । अहोरात्रदेवते । पूर्णिमामावास्यादेवते । अभिजिद्विषुवद्देवते । ओषधिवनस्पत्यभिमानिनः । हविःकपालाद्यभिमानिनश्च । कर्मणा देवत्वं गताः शतं राजर्षयश्च– पृथुः, कार्तवीर्यः, शशबिन्दुः, प्रियव्रतः, उत्तानपादः, मान्धाता, गयः, ककुत्स्थः, नहुषः, अम्बरीषः, आर्षभो भरतः, दौःषन्तिर्भरतः, मरुत्तः, हरिश्चन्द्रः, प्रह्लादः, परीक्षिदाद्याश्च । त एतेऽग्नेः शतगुणावराः ।

१. आकाशमानी भूतवायुमानी च समानाविति चैतरेयभाष्यादवगम्यते । तेन मरीचिरेकान्नविंश्यां पठितेषु प्रधानः, अष्टादश्यां कक्ष्यायां पठिताद् गणपतेः किञ्चिन्न्यूनः । प्रायस्तत्समान इति ज्ञायते । अथाप्युपासनायामेव समबलत्वं न स्वरूप इति । तेन मरीचिं पूर्वे विद्वांस एकान्नविंश्यां कक्ष्यायां पठन्ति ।



२०. द्वादशादित्येषु चरमः पर्जन्यः । अनिरुद्धभार्या उषा विराडाख्या । चन्द्रभार्या रोहिणी । सूर्यभार्या सञ्ज्ञा । यमभार्या श्यामळा । वरुणभार्या च गङ्गा । एकान्नविंशकक्ष्यापठितेभ्यो मरीच्यादिभ्यो द्विगुणावराः ।

२१. उक्तवक्ष्यमाणेभ्योऽन्ये अनाख्याताः देवाः । [केचिन्नैतां कक्ष्यां परिगणयन्ति] ।

२२. अग्निभार्या वाङ्मानिनी स्वाहा । एकान्नविंशकक्ष्यापठितेभ्यः पञ्चगुणावरा ।

२३. जलमानी बुधः । स्वाहातो द्विगुणावरः ।

२४. अश्विभार्या नाममानिनी उषाः । स्वाहातो दशगुणावरा ।

२५. कुजः[१] ।

२६. पृथिवीमानी सूर्यतनयः शनिः ।

२७. कर्ममानी वरुणपुत्रः पुष्करः ।

२८. काश्यपभार्याऽदितिः, या देवकी बभूव । द्रोणाख्यवसुभार्या धरा, या यशोदा बभूव ।

२९. कृष्णपत्नीत्वेन जाता अग्निपुत्राः १६,१०० सङ्ख्याकाः । आसु त्वष्टृपुत्री कशेरुः किञ्चिदधिका ।

१. अयमप्येकोनविंश्यां कक्ष्यायां पठनीय इत्येके ।

३०. अनाख्याता आजानजा देवाः । शतं गन्धर्वाः । शतमप्सरसः । [शतं कोटीनामृषयः सन्ति । तत्र पूर्वोक्तमृषीणां शतकं विहायावशिष्टाः] ९९,९९,९९,९०० ऋषयः । एकान्नविंशकक्ष्यापठितेभ्यः कर्मदेवेभ्यः शतगुणावराः ।

३१. पूर्वोक्तानां सप्तानां पितृपतीनां सन्ततिभूताश्चिरपितरः । आजानदेवेभ्यः शतगुणावराः ।

३२. पूर्वोक्तं गन्धर्वाणामप्सरसां च शतमष्टोत्तरं विहायावशिष्टा गन्धर्वा अप्सरसश्च । चिरपितृभ्यः शतगुणावराः ।

३३. मनुष्यगन्धर्वाः । गन्धर्वेभ्यः शतगुणावराः ।

३४. चक्रवर्तिनः । मनुष्यगन्धर्वेभ्यः शतगुणावराः ।

३५. नरोत्तमाश्चतुर्वर्णगताः । चक्रवर्तिभ्यः शतगुणावराः ।

***

एतेषु च विशिष्योपनिषदुक्ता नामादिमारुतान्ता यथा–

| | | | |
|---|---|---|---|
| १. नाममानिनी उषाः | [२४] | ८. बलमानी प्रवहः | [११] |
| २. वाङ्मानिनी स्वाहा | [२२] | ९. अन्नमानी अनिरुद्धः | [१०] |
| ३. मनोमानी पर्जन्यः | [२०] | १०. अम्मानी अहम्प्राणः | [९] |
| ४. सङ्कल्पमानी मित्रः | [१७] | ११. तेजोमानी पुरन्दरः | [८] |
| ५. चित्तमानी अग्निः | [१५] | १२. आकाशमानिनी उमा | [७] |
| ६. ध्यानमानी वरुणः | [१३] | १३. स्थिरस्मृतिमानी शिवः | [५] |
| ७. विज्ञानमानी चन्द्रः | [१२] | १४. आशामानिनी भारती | [४] |

१५. जीवमानी मुख्यप्राणः [३]

[बलमिति ज्ञानबलं देहबलं च । तदुभयमानी भूतवायुः । अन्नमिति ज्ञानरतिरूपं ज्ञानान्नं बाह्यमन्नं च । तदुभयमानी अनिरुद्धः । आप इति ज्ञानतृप्तिर्बाह्यजलं च । तदुभयमानी अहम्प्राणः । तेज इति मानसं प्रतिभानं



बाह्यं च । तदुभयमानी पुरन्दरः । आकाश इति स्थिरा प्रतिभा भूताकाशश्च । तदुभयमानिन्युमा । ततः स्थिरस्मृतिमानी शिवः । तत आशाया अपरोक्षानन्दस्य मानिन्यौ सरस्वतीभारत्यौ । ततश्च जीवकलामानी मोक्षानन्दमानी च प्राणात्मा हिरण्यगर्भ इति ।]

तथाहि श्रुतिः– **'अथातः सम्भूतिः । परमाद् विद्या विद्यायाः प्राणः प्राणाच्छ्रद्धा श्रद्धायाः शिवः शिवाद् बुद्धिर्बुद्धेरिन्द्र इन्द्रात् तैजसप्राणस्तैजसप्राणादनिरुद्धोऽनिरुद्धात् स्पर्शवातः स्पर्शवातात् सोमः सोमाद् वरुणो वरुणादग्निरग्नेर्मित्रो मित्रात् पर्जन्यः पर्जन्यात् स्वाहा स्वाहाया उषा जायते'** इति ।

## उत्तरोत्तरं ब्रह्मान्तं शतगुणाधिक्यक्रमः

| | |
|---|---|
| १. **नरोत्तमः** | १ |
| २. **चक्रवर्तिनः** | १०० |
| ३. **मनुष्यगन्धर्वाः** | १००,०० |
| ४. **देवगन्धर्वाः** | १००,००,०० |
| ५. **चिरपितरः** | १००,००,००,०० |
| ६. **आजानदेवाः** | १००,००,००,००,०० |
| ७. **कर्मदेवाः** | १००,००,००,००,००,०० |
| ८. **अग्निः** | १००,००,००,००,००,००,०० |
| ९. **अनिरुद्धः** | १००,००,००,००,००,००,००,०० |
| १०. **पुरन्दरः** | १००,००,००,००,००,००,००,००,०० |
| ११. **गरुडशेषरुद्राः** | १००,००,००,००,००,००,००,००,००,०० |
| १२. **सरस्वतीभारत्यौ** | १००,००,००,००,००,००,००,००,००,००,०० |
| १३. **ब्रह्म-वायू** | १००,००,००,००,००,००,००,००,००,००,००,०० |

ततः कोटिगुणा रमा । अनन्तगुणो नारायण इति ।

**इमामाचार्यगोविन्दश्चक्रे चक्रायुधप्रियाम् ।**
**तारतम्यस्य मीमांसां विनेयजनवाञ्छया ॥**

**इत्याचार्यगोविन्दस्य कृतिषु तारतम्यमीमांसा समाप्ता**

—०—